श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ प्रणम्यवामनंदेवंश्रियंमध्वंगुरूंस्तथा । काठकोपनिषद्भाष्यव्याख्यानंक्रियतेमया ॥ इहहिविषयविरक्तस्यशमदमादिमतोमुमुक्षोरधिकारिणआत्यंतिकानिष्टनिवृत्तीष्टप्राप्तिहेतुभगवत्स्वरूपज्ञापनायप्रवृत्तापिकाठकोपनिषदन्यथाव्याख्यानावरुद्धत्वेननतज्ज्ञापनसमर्थैतिमन्यमानोभगवानानंदतीर्थमुनिस्तांयथावद्व्याचिख्यासुःप्रारिप्सितपरिसमाप्त्यादिप्रयोजनतयाशिष्टाचारावगतामेतदुपनिषत्प्रतिपाद्यदेवताप्रणतिंशिष्यशिक्षणार्थंआदौनिबध्नाति ॥ **नमइति** ॥ भगवते ऐश्वर्यादिषड्गुणसंपन्नाय । तस्मै वेदादिप्रसिद्धायवामनायनमइतिपरोक्षतोनमस्कृत्यापरोक्षतोपिनमस्करोति । तेवामनायनमोनमइति । अपरोक्षीकृतेभगवद्रूपेभक्त्यतिशयद्योतनायनमोनमइतिद्विरुक्तिः । नम्यत्वोपपादकविशिष्टत्वोपपादनायसर्वतःपरमायेत्युक्तं । सर्वतः इंद्रियादेरव्यक्तांतात् । सर्वतःपरमत्वंचनराजादिवन्मंतव्यमित्याह ॥ **सर्वेति** ॥ सर्वतःपरमस्योपासनार्थंनदूरेगंतव्यमितिवाह ॥ **सर्वेति** ॥ उपनिषत्प्रतिपाद्यभगवन्मूर्तिकथनं वामनायेति । वक्ष्यतेच ईशानोभूतभव्यस्येत्यादिना ऐश्वर्यादिरूपंभगवत्त्वं । ब्रह्मजज्ञमित्यत्रब्रह्मजेत्यनेन वेदादिप्रसिद्धत्वं । इंद्रियेभ्यःपराह्यर्था इत्यादिना सर्वतःपरमत्वं । विद्धित्वमेतंनिहितंगुहायामित्यादिना सर्वप्राणिहृदिस्थत्वं । मध्येवामनमासीनमित्यनेनवामनत्वंच ज्ञातव्यं । ननुऋषिदेवताच्छंदोब्राह्मणपरिज्ञानएवविद्याफलति । अन्यथानर्थोक्तेः । तथाहिश्रुतिः । योहवाअविदितार्षच्छंदो

भा० । श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः॥ नमोभगवतेतस्मैसर्वतःपरमायते। सर्वप्राणिहृदिस्थायवामनाय नमोनमः ।

दैवतब्राह्मणेनेत्यादि । ततस्तदत्रवक्तव्यमितिचेत् । सत्यं । वामनायेत्यनेनदेवतोक्तैव । यमादेःस्पष्टंऋषित्वावगमादक्षरपरिगणनयाछंदःपरिज्ञानसंभवात् । विनियोजकवाक्यपरब्राह्मणपदोपलक्षितार्थज्ञानस्यव्याख्यानादेवसंभवात्तदनुक्तिरिति । अत्र वामनस्यविषयत्वोक्त्यैव । यत्परैरुक्तमस्याविद्यायाःपरब्रह्मप्रत्यगात्मभूतंविषयइति तदपिपरास्तं । यथाचैतत्तत्तथावक्ष्यत्याचार्यःस्वयमेव । अत्रउशन्हवैवाजश्रवसइत्याख्यायिकाविद्याप्रशंसयाश्रोतॄणांश्रद्धातिशयजननार्थं । स्मर्यतेहिश्रद्धादीनांतत्वज्ञानहेतुत्वंश्रद्धावान्लभतेज्ञानमितिं । ननुस्वर्गेलोकेनभयंकिंचनास्तीत्यादिनास्वर्गलोकंप्रशस्य सत्वमग्निंस्वर्ग्यमध्येषिमृत्योइत्यत्राग्नेःस्वर्गसाधनत्वमुच्यते तदयुक्तं । अग्निमात्रस्यस्वर्गसाधनत्वेऽकृताग्निचयनस्यापिस्वर्गप्राप्त्यापत्तेः । नचयोग्निंनाचिकेतंचिनुते इतियजुर्वेदोक्तिबलादत्राप्यग्निचयनस्यैवस्वर्ग्यत्वंविवक्षितमितिवाच्यं । अग्निचयनस्यापिस्वर्गमात्रंप्रतिहेतुत्वसंभवेपिस्वर्गलोकाअमृतत्वंभजंतइत्युक्तस्यस्वर्गप्राप्त्यनंतरंमोक्षंप्रतिहेतुत्वस्यानुपपत्तेः । तमेवंविद्वानित्यादिश्रुतिविरोधादित्यतःप्रमाणेनतद्व्याचष्टे ॥ अग्नाविति ॥ अतएवनाग्निचयनमात्रेणपूर्यतइतिभावेनयएवंविद्वांश्चिनुतेनाचिकेतमित्युत्तरत्र । यउचैनमेवंवेदेतिशाखांतरेप्युक्तमितिभावः । त्रिशश्चयीतेतिसंबंधः । त्रिनाचिकेतइत्यादिप्रयोगात्रिशइत्युक्तं । तत्रभयातिगइत्यनेनस्वर्गेलोकेनभयंकिंचनास्तीत्यस्यतात्पर्यमुक्तं । नतत्रत्वमितिस्वर्गलोकेमृत्योरभावउक्तः । सनयुक्तः । पुनरावृत्तिसद्भावेनसर्वथामरणाभावायोगादित्यतउक्तं । उष्यमन्वंतरंकालमिति । तथाचमन्वंतरकालपर्यंतंनतत्रत्वमितिव्याख्येयमितिभावः । स्वर्गलोकाअमृतत्वंभजंतइत्य

भा० । अग्नौविष्णुंसदाध्यायंस्त्रिशोग्निंनाचिकेतकं । यश्चयीतसतुप्राप्यस्वर्गंतत्रभयातिगः । उष्यमन्वंतरंकालं

स्यार्थमाह ॥ अमृतत्वमिति ॥ मोक्षमित्यर्थः । ब्रह्मणासहैवमोक्षप्राप्तेःस्वर्गप्राप्त्यनंतरमेवतदभावात्क्रमादित्युक्तं । एतेन स्वर्गलोकाअमृतत्व ममरणतांदेवत्वंभजंतइत्येतदपव्याख्यानमित्युक्तंभवति । प्राप्तस्वर्गलोकानांसर्वथामरणाभावस्यबाधात् । मन्वंतरादिकालमात्रवासित्वंचेन्नतत्रत्वमित्यनेनैवगतार्थत्वात् । अमरणतांदेवत्वंभजंतइत्यर्थइतिचेत् न । तस्ययोग्यतामात्रसाध्यत्वेनकर्मिमात्रस्यतदभावात् । मोक्षोपियोग्यमात्रसाध्यएवेतिचेत् । सत्यं । अग्नौविष्णुंसदाध्यायन्नितिसमाख्याबलान्मोक्षयोग्यपरत्वस्यकल्पनात् । नचतथात्वत्पक्षेकिंचिज्ज्ञापकमस्तीति । ननुउशन्हवैवाजश्रवसइत्यादिप्रथमतएवाव्याख्याय मध्यमवाक्यं किमर्थमादौव्याख्यायते । नचस्पष्टत्वात्तदुपेक्ष्येदंवाक्यंव्याकृतमितिवाच्यं । उत्तरत्रादितोपिव्याख्यानात् । उच्यते । संकरेणहिस्वभाष्येअथकाठकोपनिषद्वल्लीनांसुखार्थप्रतिबोधनार्थमल्पग्रंथावृत्तिरारभ्यतइतिप्रतिज्ञायोपनिषच्छब्दार्थविचारःकृतः । उपनिषदिति उपनिपूर्वस्यसदेर्विशरणगत्यवसादनार्थकस्यक्विप्प्रत्ययांतस्यरूपं । उपनिषदितिव्याचिख्यासितग्रंथप्रतिपादितवेद्यवस्तुविषयाविद्योच्यते । कस्मात् येमुमुक्षवोपिदृष्टानुश्राविकविषयवितृष्णाःसंतउपनिषच्छब्देनवाच्यांवक्ष्यमाणलक्षणांविद्यामुपगम्यतन्निष्ठतयानिश्चयेनशीलयंतितेषामविद्यादेःसंसारबीजस्यविशरणात्विनाशात्ब्रह्मविद्योपनिषदित्युच्यते । तथाचवक्ष्यते निचाय्यतंमृत्युमुखात्प्रमुच्यतइति । पूर्वोक्तविशेषणान्मुमुक्षून्एतत्ब्रह्मगमयतीतिगमयितृत्वेनयोगेनवाब्रह्मविद्योपनिषदित्युच्यते । तथाचवक्ष्यति । ब्रह्मप्राप्तोविरजोभूद्विमृत्युरिति । लोकादिर्ब्रह्मजोयोग्निस्तद्विषयायाःविद्यायाःद्वितीयेनवरेणप्रार्थ्यमानायाःस्वर्गलोकफलप्राप्तिहेतुत्वेनगर्भवासजन्मजराद्युपद्रवसंबंधस्यलोकांतरेपौनःपुन्येनप्रवृत्तस्यावसादयितृत्वेनशैथिल्यापादनेन

---

अमृतत्वंभजेत्क्रमादितिब्रह्मसारे ।

योगेनसापिविद्योपनिषदित्युच्यते । तथाचवक्ष्यतिस्वर्गलोकाअमृतत्वंभजंतइत्यादीति ॥ ७ ॥ तदेतद्दूषयितुंस्वर्गलोकाअमृत
त्वंभजंतइतिवाक्यतात्पर्यमादावेवोक्तं । तथाहि । यदुक्तं लोकादिर्ब्रह्मजोयोग्निरित्यादि तदयुक्तं । स्मृतिसमाख्यययाद्वितीयवरे
णप्रार्थ्यमानायाअपिविद्यायाअग्निस्थविष्णुविषयतयातस्याअपिमोक्षहेतुत्वेनस्वर्गमात्रहेतुत्वाभावात् । किंचोपनिषदितिग्रंथप्रति
पादितवेद्यवस्तुविषयाविद्योच्यतइत्यसत् । विद्यायामुपनिषच्छब्दप्रयोगादर्शनात् । सर्वासुशाखास्वारणमावर्तयेदारणमावर्तये
दुपनिषदमावर्तयेदुपनिषदमावर्तयेदित्यादिश्रुतौ उपनिषदमधीमहेअध्यापयामइतिलौकिकव्यवहारे उपनिषच्छब्दस्यग्रंथएवप्र
योगाच्च । नचसंसारहेत्वविद्यादिविशरणादेर्धात्वर्थस्यग्रंथमात्रेऽसंभवात्विद्यायांचसंभवात्विद्यायामेवोपनिषच्छब्दोमुख्यःग्रंथ
स्यतुतादर्थ्येनतच्छब्दइतिवाच्यं । ग्रंथस्यापिज्ञानद्वाराऽविद्यानिवृत्त्यादिहेतुत्वसद्भावात् । नहियत्रप्रयोगोवर्ततेतत्रशब्दोऽमु
ख्यः । यत्रतुसनास्तितत्रमुख्यइतिदृष्टचरमिति । एवंपरकीयादिभाष्यनिरासायस्वर्गलोकाअमृतत्वंभजंतइतिवाक्यमादौव्या
ख्यायेदानींअप्रतिपत्तिविप्रतिपत्तिनिरासायादितएवव्याचक्षाणस्तावदुशन्हवाइतिप्रथमवाक्यंप्रमाणेनैवव्याचष्टे ॥ इच्छन्नि
ति ॥ उशन्नित्यस्यार्थइच्छन्निति । वशइच्छायामितिधातोः । वकारस्योकारः । उशइच्छायामित्येववाधातुः । उक्तंचउशइच्छा
प्रकीर्तितेति । वशकांतौकांतिरिच्छेतिवा । स्वर्गलोकमिच्छन्नित्यन्वयः । स्वर्गलोकमिति श्रुतौशेषोक्तिः । वाजश्रवोनस्नेत्यनेन वा
जश्रवाइतिकश्चिदृषिस्तस्यापत्यंवाजश्रवसइतिव्याख्यानमसदित्युक्तंभवति । सर्ववेदसमित्यस्यार्थःसर्वस्वदक्षिणामिति । उद्दालको

भा० । इच्छन्वाजश्रवोनप्रादद्दौसर्वस्वदक्षिणां । उद्दालकस्स्वर्गलोकं

नामतः। कथंतर्ह्यौद्दालकिरित्युत्तरत्रप्रयोगः। उद्दालकएवौद्दालकिरितिव्याख्यानात्। यद्वाएतत्पितुरपिउद्दालकइतिनाम। अतो नानुपपत्तिः। सर्ववेदसंददावित्येतदनंतरमध्याहार्यमाह॥ ददाविति॥ निरिंद्रियाइतिवक्ष्यमाणविशेषणोपलक्षणं। अन्यथादक्षिणासुनीयमानासुकुमारस्यश्रद्धाप्रवेशेकारणाभावप्रसंगः। पीतोदकाइत्याद्यनुवादासंभवश्चेतिभावः। ननुसर्वस्वदक्षिणादानावसरेस्वस्यदेयकोटौप्रवेशाभावात्तातकस्मैमांदास्यसीतिवचनेकिंनिमित्तमित्यतस्तदभिप्रायमाह॥ मामिति॥ तेत्वया ईदृशाःईदृश्यः गावोनदातव्याः। नचैवंगोदानप्रतिज्ञाभंगः। मांदत्वापितस्याःपूरणीयत्वादित्यर्थः। सहोवाचपितरमित्यस्यार्थउवाचेति। तं होवाचमृत्यवेत्वाददानीतिवाक्यस्ययथाश्रुतमात्रार्थप्रतीतिनिरासायाभिप्रेतमर्थमाह॥ तमिति॥ त्वंम्रियस्व। मृत्वामृत्योर्गृहान्गच्छ। तदापिप्रवसंतंमृत्युंप्रतिगंतासि। तस्यगृहेतिस्रोरात्रीरनश्नन्वसतादित्यादिशशापेत्यर्थः। तथाचोक्तंयजुर्वेदकाठके। सहोवाच। तातकस्मैमांदास्यसीति। द्वितीयंतृतीयं। तंहपरीतउवाचमृत्यवेत्वाददानीति। परेहिमृत्योर्गृहान्मृत्यवेत्वादामिति। तंवैप्रवसंतंगंतासीतिहोवाच। तस्यस्मतिस्रोरात्रीरनश्नन्गृहेप्रवसतात्। सयदित्वापृच्छेत्कुमारकतिरात्रीरवात्सीरिति तिस्रइतिप्रतिब्रूतात्। किंप्रथमांरात्रिमाश्नाइति प्रजांतइति। किंद्वितीयामिति पशूंस्तइति। किंतृतीयामिति साधुकृत्यांतइतीति। एवंचात्रश्रुतौमृत्यवेत्वाददानीतिउपलक्षणं। अतएवशाखांतरोक्तस्यापिसंग्रहाभिप्रायेणैवतंशशापेतिसामान्येनोक्तं। य

भा०। ददौगाश्चनिरिंद्रियाः। मांदत्वापिनतेगावोदातव्याईदृशाइति। उवाचपुत्रस्तंबालःतंशशापपितास्वयं।

थाश्रुतेसंगत्यदर्शनाद्वैश्वानरःप्रविशतीत्यतःप्रागध्याहार्यमाह ॥ **सजगामेत्यादिनायमंसेत्यंतेन** ॥ यमंप्रवसंतमितिशेषः । तंवैप्रवसंतंजगामेतिशाखांतरोक्तेः । अतएवयमस्यपत्यासंपूज्यमानोपीत्युक्तं । अर्घ्यादिकंनजग्राह । पित्रायमलोकंप्रतिगत्वा पितस्यगृहेत्रिरात्रंनभोक्तव्यमित्युक्तत्वात् । तथाचोक्तं । तस्यस्मतिस्रोरात्रीरित्यादि । हरापहरेतिप्रतीतिनिवारणायहरवैवस्व तोदकमित्यस्यार्थमाह ॥ **उदकमाहरेति** ॥ इत्युक्तइतीतिशब्दस्यपूर्वोत्तराभ्यांसंबंधः । अनेन वैश्वानरइत्यादिकं यमामात्या दिकानांवचनमित्येतदपव्याख्यानमित्युक्तंभवति । नमस्तेस्तुब्रह्मन्नित्यादिकंकस्यवचनमितिनज्ञायते । विशेषानुक्तेर्यमभार्याव चनमितिचप्रतीयतेअतआह ॥ **इत्युक्तइति** ॥ तथाचोक्तं । नमस्तेअस्तुभगवइतिहोवाचेति । तमागत्यपप्रच्छेतिपूर्वंयमस्यप्र स्तुतत्वेनयमवाक्यमिदं । किंतद्वरत्रयमित्यतआह ॥ **सौमनस्यमिति** ॥ एवशब्दश्चशब्दार्थः । हरिमित्यनेनसंबंधः । इति तेनयाचितमितिशेषः । सौमनस्यंपितुरित्यनेन शांतसंकल्पइत्यादिप्रथमप्रश्नवाक्यं यथापुरस्ताद्भविताप्रतीतइतिपरिहारवाक्यं चोक्ततात्पर्यकं । नाचिकेताग्निगंहरिमित्यनेन द्वितीयप्रश्नप्रतिवचनयोरग्निमात्रविषयत्वमसदित्युक्तंभवति । हरिंहरिज्ञानमित्य र्थः । एवमुत्तरत्रापि । येयंप्रेतेविचिकित्सेत्यादिप्रश्नपरिहारवाक्यतात्पर्यं अन्यथाप्रतीतिनिरासायाह ॥ **मुक्तेस्थितमिति** ॥

भा० । सजगामयमंबालोब्रह्मचारीयमस्यतु । पत्न्यासंपूज्यमानोपिजग्राहार्घ्यादिकंनतु । आगतेतुयमेप्राहयमंसोदकमाहर । इत्युक्तस्सयमस्तंतुसंपू ज्यादाद्वरत्रयं । सौमनस्यंपितुश्चैवनाचिकेताग्निगंहरिं । मुक्तेस्थितंचतंविष्णुमितिप्रादाद्वरत्रयमितिगतिसारे ।

मृतेस्थितमितिक्वचित्पाठः । सत्वमग्निंस्वर्ग्यमित्यादिद्वितीयप्रश्नपरिहारयोःश्रूयमाणोग्निशब्दस्तदंतर्गतभगवत्परइत्युक्तं । तत्केननिमित्तेनेत्याशंकांपरिहरन्ननंतलोकाप्तिमितिवाक्यंप्रसिद्धाग्निपरमित्यन्यथाप्रतीतिनिरासायस्मृत्यैवव्याचष्टे ॥ अग्र्यत्वादिति ॥ अग्र्यत्वा दग्रेभवत्वादुत्तमत्वादितियावत् । अग्रशब्दात्सप्तमीसमर्थाद्भवार्थेनिप्रत्ययेरशब्दलोपश्चेतिभावः । अनंतलोकाप्तिमित्यस्यार्थमाह ॥ लोकइति ॥ अनंतस्येत्यनुवादेनविष्णोरितिव्याख्यानं । अनेनअनंतस्यलोकआप्यतेयेनसोनंतलोकाप्तिरितिविग्रहइत्युक्तंभवति । अनंतोलोकआप्यतेयेनसोनंतलोकाप्तिरित्यपिविग्रहंदर्शयति ॥ नित्यइति ॥ नित्योलोकइत्यन्वयः । स्वरूपसतस्तस्यानंतलोकाप्तिसाधनत्वेतिप्रसंगात्तज्ज्ञानादित्युक्तं । एतेनानंतलोकाप्तिं स्वर्गलोकफलप्राप्तिसाधनमितिव्याख्यानमपास्तं । स्वर्गलोकस्यानंतलोकत्वाभावात् । स्वर्गलोकोपिअनंतस्यदेशतोपरिच्छिन्नस्यलोकोभवत्येवेतिचेत् अथाप्यसाधारण्येनैवव्यपदेशात्अनंतत्वाभावाच्चार्थांतरांगीकारोयुक्तः । प्रतिष्ठाशब्देनधारकत्वमुक्तं । प्रतिष्ठाधारकःपुमानितिवचनात् । तत्कस्यधारकइत्यतआह ॥ प्रतिष्ठेति ॥ निहितंगुहायामित्यस्यार्थमाह ॥ सविष्णुरिति ॥ एतेन निहितंगुहायामित्यस्यविदुषांबुद्धौप्रविष्टमितिव्याख्यानमपास्तं । किंचात्मास्यजंतोर्निहितोगुहायामित्यादावुत्तरत्रात्मनोजीवहृद्गुहानिहितत्वमेवोच्यते । त्वयापितथैवव्याख्यानात् । एवंचात्रापिहृद्गुहानिहितत्वमेवोच्यतइतिकिंनव्याक्रियते । नचाग्नौतस्यासंभवादेवंव्याख्यानमितिवाच्यं । ततएवविष्णुपरत्वांगीकारौचित्यात् । अन्यथाप्रायपाठविरोधादिति । लोकादिमित्यस्यलोकानामादिंप्रथमशरीरत्वादि

भा० । अग्र्यत्वादग्निनामासौनाचिकेताग्निगोहरिः । लोकोविष्णोरनंतस्यतज्ज्ञानान्नित्यआप्यते । प्रतिष्ठासर्वलोकस्यसविष्णुस्सर्वहृद्गतः ।

तिव्याख्यानमसत् । अग्नेःप्रथमशरीरत्वेमानाभावात् । तत्तेजोसृजतेतिश्रुतिरस्तीतिचेत् । नआत्मनआकाशःसंभूतइत्यपिविद्य मानत्वादितिभावेनव्याचष्टे ॥ सएवेति ॥ त्रिभिरेत्यसंधिं तरतिजन्ममृत्यू निचाय्येमांशांतिमत्यंतमेतीत्यादेस्तात्पर्यमाह ॥ तंज्ञात्वेति ॥ याइष्टकाःश्रोतव्याःस्वरूपेणताश्चोवाचेतिव्याख्यानमसत् । इष्टकास्वरूपस्यप्रत्यक्षसिद्धत्वेनावक्तव्यत्वादिति भावेनतदनूद्यव्याचष्टे ॥ याइति ॥ किंचत्रिनाचिकेतस्त्रयमेतद्विदित्वा शांतिमत्यंतमेतीत्युत्तरत्रत्रयमेतद्विदित्वेत्यनेनयाइष्टका इत्याद्युक्तत्रयपरिज्ञानिनोमोक्षःफलत्वेनोच्यते । नचप्रसिद्धेष्टकाग्रहणेतदुपपद्यते । ननुइष्टकादेवताग्रहणेपिकथंतदुपपत्तिः । अ न्यदेवताज्ञानेनमोक्षासंभवादित्यतःस्मृत्यैवेष्टकादेवतास्वरूपंनिरूपयन्यावतीर्वेत्युक्तेष्टकादेवतासंख्यांचदर्शयन्यथावेत्युक्तंविवृ णोति ॥ इष्टकादेवतामिति ॥ यद्यप्यन्यत्राशीत्युत्तरसहस्ररूपमिष्टकासुसंस्थितमित्युक्तं । अशीत्युत्तरसहस्ररूपंवर्णेषुसंस्थि तमित्युपक्रम्य रूपाणिविष्णोस्तावंतिचेष्टकासुपृथक्पृथगित्यैतरेयभाष्येउक्तत्वात् अशीतिसहस्रंवार्कलिनइतिश्रुतेश्च । तथापित त्कौठरव्यमतमाश्रित्योक्तं । अथकौठरव्यइत्युपक्रम्यअशीतिसहस्रंवाअर्कलिनइत्युक्तत्वात् । ऋषिमतांतरमाश्रित्येदमुक्तमित्य विरोधः । यद्वाप्रत्येकमेकैकेष्टकायांअशीत्युत्तरसहस्ररूपपरंतद्वचनं । अतएवपृथक्पृथगित्युक्तं । अत्रतुइष्टकानांषष्ट्युत्तरशतत्र यसंख्याकत्वात्तत्तद्गतैकैकरूपविवक्षयाषष्ट्युत्तरशतत्रिकमित्युक्तमित्यविरोधः । त्रिभिरेत्यसंधिमित्येतदप्रतीतेरनूद्यतात्पर्यमाह॥

भा० । सएवसर्वलोकादिस्तंज्ञात्वामुच्यतेध्रुवमितिच । याइष्टका याइष्टकादेवताः । इष्टकादेवतांविष्णुंषष्ट्युत्तरशतत्रिकं । यथावदेवविज्ञाय मुच्यतेकर्मबंधनादितिच ।

त्रिभिरिति ॥ त्रिभिः ऋग्यजुःसामाथर्वाख्यैःवेदैःसंधिं । संबंधमेत्यप्राप्येत्यक्षरार्थमभिप्रेत्यतत्तात्पर्यमुक्तं ॥ वेदैरविरुद्ध इति ॥ वेदविरुद्धत्वेवेदैःसहसंबंधायोगादितिभावः । ननुवेदाविरुद्धत्वंवेदाध्ययनवत्त्वं तदुक्तकर्मानुष्ठानवत्त्वंवावाच्यं । अन्यस्यासंभवात् । नचतद्युक्तं । अज्ञानामपिवेदाध्ययनादिसत्त्वेनजन्ममृत्यूत्तरणप्रसंगादित्यतआह ॥ वेदेति ॥ तथाचत्रिनाचिकेतस्त्रिकर्मकृज्जन्ममृत्यूतरतिइत्युक्ते भगवज्ज्ञानेनैवमोक्षश्रवणात्कथमेतदित्याशंकायांज्ञानद्वारैवकर्मणोमोक्षसाधनत्वमभिप्रेतं नसाक्षादितिभावेनत्रिभिरेत्यसंधिमित्युक्तमितिभावः । एतेन त्रिभिः मातापित्राचार्यैः संधिं संबंधमेत्य मात्राद्यनुशासनंयथावत्प्राप्येत्यर्थ इत्येतदपव्याख्यानमित्युक्तंभवति । तस्यापिकर्ममात्रत्वेनसाक्षाज्जन्ममृत्यूत्तरणहेतुत्वासंभवात् ॥ त्रिकर्मकृत् इज्याध्ययनदानानांकर्तेतिव्याख्यानमसदितिभावेनतद्व्याचष्टे ॥ त्रिकर्मकृदिति ॥ परोक्तएवार्थःकिंनस्यादित्यतो यज्ञदानतपसामावश्यकत्वस्मरणादितिभावेनाह ॥ यज्ञेति ॥ अध्ययनमपिनत्याज्यमितिचेत् । न । अत्रतपःशब्दस्य देवद्विजगुरुप्राज्ञपूजनंशौचमार्जवं । ब्रह्मचर्यमहिंसाचशारीरंतपउच्यते । अनुद्वेगकरंवाक्यंसत्यंप्रियहितंचयत् । स्वाध्यायाभ्यसनंचैववाङ्मयंतपउच्यते । मनःप्रसादःसौम्यत्वंमौनमात्मविनिग्रहः । भावसंशुद्धिरित्येतत्तपोमानसमुच्यतइत्युक्तत्रिविधतपःपरत्वेनाध्ययनस्यापितदंतर्गतत्वादितिभावः । त्रयमेतदित्यत्रोक्तंत्रयंकिमितिनज्ञायते अतआह ॥ त्रयमेतदिति ॥

---

भा० । त्रिभिरेत्यसंधिं । वेदैरविरुद्धः । वेदोक्तप्रकारेणभगवत्तत्वादिकंजानन्नित्यर्थः । त्रिकर्मकृत् । यज्ञदानतपःकर्ता । यज्ञदानतपःकर्म । नत्याज्यंकार्यमेवतदितिवचनात् । त्रयमेतत् याइष्टकाइत्यादि ।

ब्रह्मजज्ञमित्येतस्यब्रह्मणोहिरण्यगर्भाज्जायतइतिब्रह्मजः । सचासौज्ञश्चेतितथोक्तइतिव्याख्यानमसदितिभावेनब्रह्मजज्ञपदंस्मृत्यैवव्याचष्टे ॥ **ब्रह्मेतीति** ॥ अनेकरूपांविचित्रामित्यन्यथाप्रतीतिनिरासायतदनूद्यव्याचष्टे ॥ **अनेकरूपामिति** ॥ अनेकरूपशब्दस्यसुवर्णवाचित्वेऽभिधानमाह ॥ **बहुरूपमिति** ॥ बहुशब्दोनेकपरः । अस्त्वनेकरूपशब्दःसुवर्णवाची तथापिप्रकृतेसुवर्णपरइतिकुतइत्याशंकांपरिहरन् सचापितत्प्रत्यवदद्यथोक्तमित्यारभ्यशृंकांचेमामनेकरूपांगृहाणेत्यंतवाक्यव्याख्यानरूपांस्मृतिंपठति ॥ **यमइति** ॥ शृंकामित्यनुवादेनकंठमालामितिव्याख्यानं । अनेनशृंकांशब्दवतीमित्येतदपव्याख्यानमित्युक्तंभवति । एवंस्वर्ग्याग्निप्रकरणंतदंतर्गतभगवत्परमित्यागमेनसाधितं । इदानींआंतरोपपत्तिभिश्चतत्साधयति ॥ **लोकादिरित्यादिना** ॥ यद्वा नन्वस्त्वेतत्प्रकरणंविष्णुपरं । प्रसिद्धाग्निपरमपिकिंनस्यात् । उभयपरत्वेबाधकाभावात् । नचसर्वेषांशब्दानांभगवन्नामत्वेनाग्निशब्दस्यापिभगवद्वाचकत्वादन्यत्रावृत्तिः समाकर्षन्यायेनान्यत्रापिशब्दस्यवृत्त्यंगीकारादित्यतआह ॥ **लोकादिरिति** ॥ आदिपदेन गुहानिहितत्वजन्ममृत्यूत्तरणादिमोक्षहेतुज्ञानविषयत्वादीनांग्रहणं । चशब्देनोक्तागमसमुच्चयः । भगवानेव एतत्प्रकरणप्रतिपाद्यइतिशेषः । एवशब्देनाग्निव्यावृत्तिः । सत्यमन्यत्रापिशब्दप्रवृत्तिरंगीक्रियतइति । त-

भाष्यं ॥ ब्रह्मेतिवेदउद्दिष्टस्तस्माद्व्यक्तोयतोहरिः । ब्रह्मजस्तेनकथितस्सएवज्ञोऽखिलज्ञतइतिनामनिरुक्तौ । अनेकरूपांस्वर्णमयीं । बहुरूपंचपुरटंकार्तस्वरमितीर्यतइत्यभिधानात् । यमोनुवादसंतुष्टोवह्नेस्तन्नामतामपि । शृंकांस्वर्णमयींचैवकंठमालामदाद्विभुरितिपाद्मे । लोकादिःप्रतिष्ठाब्रह्मजज्ञोनंतलोकाप्तिरित्यादिविशेषणैश्चभगवानेव ।

थापियत्रान्यग्रहणेबाधकाभावस्तत्रैव । यथाऽव्यक्तात्पुरुषःपरइत्यादावव्यक्तादिशब्दानांप्रकृत्यादिपरत्वं । यत्रबाधकसद्भावस्तत्रभगवन्मात्रपरत्वं । यथाजीवाद्भवंतिभूतानीत्यादौजीवादिशब्दानां । ततश्चप्रकृतेपिएतत्प्रकरणस्याग्निपरत्वांगीकारेबाधकसद्भावाद्भगवानेवात्रप्रतिपाद्यः।लोकादित्वादीनांभगवत्येवसंभवादग्नावसंभवादितिभावः। नन्वेतेषांविशेषणानांभगवत्परत्वमेव कुतइतिचेत्न।उदाहृतवचनैस्तथाव्याख्यातत्वात्। किंचकामस्याप्तिंजगतःप्रतिष्ठांक्रतोरानंत्यमभयस्यपारं। स्तोममहदुरुगायंप्रतिष्ठांदृष्ट्वेत्युत्तरमंत्रे अनंतलोकाप्तिमथोप्रतिष्ठामित्याद्यत्रोक्तमेवपरामृश्यते। जगतःप्रतिष्ठामित्यनेना थोप्रतिष्ठामित्यस्य क्रतोरानंत्यमित्यनेना नंतलोकाप्तिमित्यस्या भयपारस्यमित्यनेन तरतिजन्ममृत्यूशांतिमत्यंतमेतीत्यादेः स्तोममहदित्यनेन ब्रह्मजेत्यस्य प्रतिष्ठामित्यनेन मोदतेस्वर्गलोकइत्यस्यपरामर्शात्। तत्रचैतानिह्युरुगायविशेषणानिकथ्यंते। अतोत्रापिअनंतलोकाप्तिमित्यादीनिभगवतएवविशेषणानि नाग्नेरित्याह ॥ स्तोमेति ॥ इतिवाक्ये प्रतिष्ठात्वानंतलोकाप्तित्वादीनामितिशेषः । यद्यप्यादितएवोदाहर्तव्या । तथापिकामस्याप्तिमित्यनेनकस्याप्यपरामर्शात्पूर्वार्धेउरुगायपदाभावात्सर्वोदाहरणेगौरवप्रसंगाच्चैतदेवोदाहृतं । ननुजगतःप्रतिष्ठामित्यादीनांउरुगायविशेषणत्वेपिभगवद्विशेषणत्वंकुतइतिचेत्न । विचक्रमाणस्त्रेधोरुगायः । अत्राहतदुरुगास्यवृष्णःपरमंपदमवभातिभूरि। यःपार्थिवानित्रिभिरिद्विगामभिरुरुक्रमिष्ठोरुगायायजीवसइतिविष्णुसूक्ते। ऊर्जंपृथिव्याभक्त्वायोरुगायमुपासते।त्वंविष्णुरुरुगायोनमस्यइतिश्रुत्यंतरे।श्रीर्यत्ररूपिण्युरुगायपादयोःकरोतिमानंबहुधाविभूतिभिरि

भाष्यं ॥ स्तोममहदुरुगायंप्रतिष्ठमितिपरामर्शाच्च ।

तिभागवतेचोरुगायशब्दस्यभगवत्येवप्रसिद्धत्वेनतेषामुरुगायविशेषणत्वेभगवद्विशेषणत्वस्यैवप्राप्तेरित्याह ॥ **भगवतइति** ॥ हिशब्दोहेतौ । यदुक्तमित्यादिविशेषणैरित्यनेनगुहानिहितत्वविशेषणेनभगवानेवेति तदयुक्तं । जाठराग्निरूपेणाग्नेरपिगुहानिहितत्वसंभवात् । अग्नेरपिदेवत्वेनशरीरत्वाच्चतत्संभवः। तत्किंभगवतइत्यतआह ॥ **गुहेति** ॥ तस्यैव भगवतएव। प्रसिद्धं योवेदनिहितंगुहायामित्यादिषु। हृदिह्येषआत्मेतिजीवेपिहृद्गुहानिहितत्वप्रसिद्धेर्विशेषतइत्युक्तं । सत्यमग्नेरपिहृद्गुहानिहितत्वंप्रसिद्धमिति । तथापिविशेषतःश्रुत्यादौभगवतएवप्रसिद्धं। विशेषतःप्रसिद्धमेवहिग्राह्यं। नहिमैथिलःपांचालइत्युक्तेयःकोपिमिथिलायांपंचालेषुवाभवोगृह्यते । किंतुप्रसिद्धस्तदधिपतिरेवेतिभावः । एवंप्रतिष्ठाब्रह्मजज्ञानंतलोकाप्तिरित्यादिविशेषणानांभगवत्परत्वमुपपाद्यान्यत्रासंभवप्रदर्शनायोपलक्षणत्वेनानंतलोकाप्तिरितिविशेषणस्याग्नावसंभवंदर्शयति ॥ **नचेति** ॥ भगवदधिष्ठानत्वादिनाग्निपरिज्ञानस्यापिमोक्षहेतुत्वान्मात्रपदं। तद्व्यवच्छेद्यमाह॥ **भगवज्ज्ञानंविनेति**॥ ननुभगवज्ज्ञानाभावेपिअग्निपरिज्ञानपूर्वकंयज्ञादिकरणेनानंतलोकाप्त्युपपत्तेरग्नावप्यनंतलोकाप्तित्वंसावकाशमित्यतस्तदभावेश्रुतिमाह ॥ **तद्वाइति** ॥ हेगार्गितदेतदक्षरमविदित्वायदस्मिन्लोकेजुहोति वैश्वदेवादिकान्होमान्करोति यजतेअश्वमेधादियज्ञांश्चकरोति बहूनिवर्षसहस्राणितपस्तप्यते । अस्यभगवदज्ञानिनः तत् होमादिकंसर्वं अंतवदेवांतवत्फलमेवभवतीत्यर्थः । जुहोति ददाति । यजते यज्ञादिकं

भाष्यं ॥ भगवतोह्युरुगायनामप्रसिद्धं। गुहानिहितत्वंचतस्यैवविशेषतःप्रसिद्धं । नचाग्निपरिज्ञानमात्रेणानंतलोकाप्तिर्भगवज्ज्ञानंविना । तद्वाएनदक्षरंगार्ग्यविदित्वाऽस्मिँल्लोकेजुहोतियजतेतपस्तप्यतेबहूनिवर्षसहस्राण्यंतवदेवास्यतद्भवतीत्यादिश्रुतेः ।

करोतीतिवा । जुहोतियज्ञादिकंकरोति । यजतिददातीतिवार्थः । नन्वग्निपरिज्ञानमात्रेणाप्यनंतलोकाप्तिरस्त्येव । मोक्षप्राप्तेर भावेपिस्वर्गप्राप्तेःसत्त्वात् । नचास्यानंतत्वाभावः । बहुकालावस्थानमात्रेणतथाव्यवहारोपपत्तेरित्यतआह ॥ नचेति ॥ सति संभवतीत्यर्थः । अनंतलोकशब्दस्यमोक्षोहिमुख्यार्थः । स्वर्गस्त्वमुख्यार्थः । नहिबाधकाभावेन मुख्यार्थेसंभवत्यमुख्यार्थोयुज्यत इत्यर्थः । नन्वस्त्वनंतलोकशब्दोमोक्षपरएव । तथाप्यग्निपरिज्ञानस्यानंतलोकाप्तिसाधनत्वमस्त्येव । साक्षान्मोक्षसाधनत्वा भावेपिपरंपरयातत्साधनत्वादित्यतआह ॥ नचेति ॥ मुख्ये साक्षात्साधनत्वे । नन्वनंतलोकाप्तिरितिविशेषणस्याग्नावसंभवे पिलोकादिरित्यादिविशेषणानिसंभवंत्येव । तथाहि । लोकानामादिःप्रथमशरीरत्वात् । प्रतिष्ठाजगतआश्रयः । ब्रह्मजो हिरण्यगर्भजोज्ञःसर्वज्ञश्चेतिब्रह्मजज्ञो गुहानिहितोविदुषांबुद्धौप्रविष्टइति । तत्कथमेतैर्विशेषणैर्भगवानेवात्रप्रतिपाद्यइतिनिश्चय इतिचेत्न । अग्नेरपिमुख्यतोलोकादित्वविशेषणासंभवात् । यथाकथंचित्संभवतीतिचेत् तत्राह ॥ नचेति ॥ येयंप्रेतइ तितृतीयप्रश्नवाक्यस्येयंविचिकित्सासंशयः । प्रेतेमनुष्ये अस्ति शरीरेंद्रियमनोबुद्धिव्यतिरिक्तोदेहांतरसंबंध्यात्मेत्येके । नाय मेवंविधोस्तीत्येके । अत्रचास्माकंनप्रत्यक्षेणनाप्यनुमानेननिर्णयोयुज्यतइतिव्याख्यानमसदितिभावेनस्वयंतद्वाक्यंव्याचष्टे ॥ प्रेतइति ॥ प्रेतशब्दस्यमृतसामान्यवाचकत्वेपितद्विशेषोमुक्तोत्रग्राह्यइतिभावेनमुक्तइत्युक्तं । मनुष्यशब्दश्चेतनपरः । अज्ञा नामपिकेषांचिन्मतेभगवतोव्याप्तत्वांगीकारेणमुक्तेमनुष्येआकाशादिवत्सत्त्वमात्रमंगीक्रियतइत्यतोनियामकत्वेनेत्युक्तं । नास्तीत्य

भाष्यं ॥ नचमुख्येसत्यमुख्यार्थोयुज्यते । प्रेतेमुक्तेमनुष्येनियामकत्वेनभगवानस्तीतिज्ञानिनोवदंति । नास्तीत्यज्ञाः ।

ज्ञाइत्यनेन ज्ञानिनामेवायंविवादउच्यतइतियथाश्रुतप्रतीतिरपिपरास्ता । एवंवदतांज्ञानित्वाभावात् । ननुमुक्तनियामकत्वेन भगवानस्तीतिज्ञानिनोवदंति नास्तीत्यज्ञाइतिजानतोनचिकेतसःसंशयोनिवृत्तएव । ज्ञानिमतस्यैवग्राह्यत्वेनमुक्तेनियामकतया भगवानस्तीत्येवसिद्धत्वात् । अतएतद्विद्यामितिकिंप्रार्थ्यतइत्यतस्तद्व्याचष्टे ॥ तस्येति ॥ एतच्छब्दार्थस्तस्यनियामकस्यस्व रूपमिति । तस्य संशयविषयीभूतस्येत्यर्थः । नात्रनचिकेतसामुक्तेनियामकतयाभगवानस्तिनवेतिसंशयसत्त्वात्तन्निर्णयः कथमितिप्रार्थ्यते किंतुमुक्तेनियामकत्वेनभगवानस्तीतिसिद्धमेव । तस्यनियामकस्यस्वरूपंयथावद्विद्यामित्येवप्रार्थ्यते अतोनानुप पत्तिरित्यर्थः । ननुकुतएवंव्याख्येयं परोक्तएवार्थःकिंनस्यादित्यतस्तज्ज्ञापकमाह ॥ अस्येति ॥ किमत्रपरिशिष्यतइत्यतः परमेतत्प्रश्नविषयस्यैवानुवादादितिशेषः । तेनचशब्दोपपत्तिः । येयंप्रेतेविचिकित्सेत्यत्रोक्तस्यैवोत्तरत्रा स्यविस्रंसमानस्येत्य नेनानुवादेसत्येतदित्यनेन यत्पृष्टंतदेतदितिप्रतिज्ञाय नप्राणेननापानेनेत्यादिनाजीवनहेतुत्वादिनाभगवत्स्वरूपस्यैवोक्तत्वादत्रा पिमुक्तस्थोभगवान्पृच्छ्यतइतिसिद्धमित्यर्थः । स्यादेतत् । यदिअस्यविस्रंसमानस्येत्येतदेवमुक्तपरंस्यात् । तदेवकुतइत्यत आह ॥ देहादिति ॥ अन्यथाविशब्दवैयर्थ्यादितिभावः । नन्वथाप्यस्यप्रश्नवाक्यस्यमुक्तविषयत्वंनोपपद्यते । नचिकेतोमरणं मानुप्राक्षीरितिमरणविषयेप्रश्नोनकर्तव्यइत्युक्त्या प्रश्नवाक्यस्यमरणविषयत्वप्रतीतेरित्यतआह ॥ मुक्तेरपीति ॥ भवत्युपपद्य

---

भाष्यं ॥ तस्यनियामकस्यस्वरूपंयथावदहंविद्यां । अस्यविस्रंसमानस्यशरीरस्थस्यदेहिनः । देहाद्विमुच्यमानस्यकिमत्रपरिशिष्यते । एतद्वै तदितिपरिहाराच्चमुक्तेस्थितोभगवान्पृच्छ्यतइतिसिद्धं । देहाद्विशेषेणमोचनंनाममुक्तिरेव । मुक्तेरपिमरणात्मकत्वान्मरणमित्यपिभवति ।

ते । यदुक्तंदेहाद्विशेषेणमोचनंनाममुक्तिरेवेति तदयुक्तं । देहाद्विमुच्यमानस्येत्यस्यस्थूलशरीरंत्यजतइत्यर्थोपपत्तेरितिचेत् न । विस्रंसमानस्येत्यनेनैवास्यार्थस्योक्तत्वेनपौनरुक्त्यापातादितिभावेनाह ॥ **स्थूलेति** ॥ व्याख्यानव्याख्येयभावस्त्वगतिकागतिरितिभावः । यदुक्तंद्वितीयतृतीययोरुभयोरपिप्रश्नयोर्भगवद्विषयत्वमिति तदयुक्तं । तथासतिद्वितीयप्रश्नस्यझडितिपरिहाराभिधानं तृतीयप्रश्नस्यत्वतिकृच्छ्रेणपरिहाराभिधानमितिविशेषासंभवात् । नचोभयोरपिप्रश्नयोर्भगवद्विषयत्वे एकस्यझडितिपरिहाराभिधानेअपरस्यकृच्छ्रेणतदभिधानेकारणमस्तीत्यतस्तत्रकारणविशेषंप्रमाणेनाह ॥ **अग्निस्थमिति** ॥ अग्निस्थस्यैवपरमात्मनोवक्ष्यमाणविशेषणप्रकारकज्ञानंभवत्येवमोक्षहेतुरतउक्तं । सामान्यादिति । तुशब्दोअवधाराणार्थः । सामान्यादेवेतिसंबधः । चशब्दात्संसारेचजीवांतस्थत्वंनाकाशसाधारण्येनेत्याह ॥ **नियामकंचेति** ॥ तथाहरेस्सर्वोत्तमत्वादीन्गुणान् इंद्रियेभ्यःपराह्यर्थाइत्यादिनोक्तानविज्ञायस्थितस्यनैवमुक्तिर्भवेदित्यर्थः । अतएवयमेन तंदुर्दर्शंगूढमनुप्रविष्टमित्यादिनावक्ष्यमाणविद्याप्रशंसाक्रियते । मुक्तजीवनियामकहरिज्ञानमंतरेणमोक्षप्राप्त्यभावेपितद्रूपंकिमितिकृच्छ्रेणवक्तव्यमित्यतआह ॥ **तस्येति** ॥ तर्ह्यग्निस्थभगवन्निरूपणंपृथक्नकार्यंस्यात् । तज्ज्ञानस्यमुक्तिसाधनत्वाभावेनव्यर्थत्वादित्यतआह ॥ **तथापीति** ॥

---

भाष्यं ॥ स्थूलदेहपरित्यागस्तुविस्रंसमानस्येत्यनेनैवोक्तोभवति । अग्निस्थंपरमात्मानंसामान्याज्जानतोपितु । अजानतस्तुमुक्तौचजीवांतस्स्थितमीश्वरं । नियामकंचजीवानांमुक्तानामपिसर्वदा । गुणान्सर्वोत्तमत्वादीनविज्ञायहरेस्तथा । नैवमुक्तिर्भवेत्तस्मात्कृच्छ्रात्तदवदद्यमः । तस्यगोप्यत्वविज्ञप्त्यै तथाप्यग्निस्थवेदनात् । सुखाधिक्यंभवेन्मुक्तौतस्मात्तत्पृथगीरितमितितत्वसारे ।

संसारनिवृत्तिलक्षणमोक्षहेतुत्वाभावेपीत्यर्थः । एवंचामृतत्वंभजेत्क्रमादितिपूर्वत्रामृतत्वशब्दोमौक्तसुखाधिक्यपरतयाव्याख्येय इतिनतद्विरोधइतिमंतव्यं । अनेनपरव्याख्यानेजीवस्यातिगोप्यत्वाभावात्कृच्छ्रेणपरिहारोक्तिर्नस्यादितिबाधकंसूचितं । ईश्वरविषयएवतृतीयप्रश्नइत्यत्रज्ञापकांतरमाह ॥ स्थाणुमिति ॥ यएषुसुप्तेष्वित्युत्तरवाक्येजीवेषुस्थितस्यभगवतएवकथनात्प्रश्नवाक्येपि जीवेषुस्थितोभगवानेवविषयइतिवक्तव्यं । अन्यथाप्रश्नोत्तरयोरनानुगुण्यापातात्। नचैषुसुप्तेष्वित्यस्यजीवपरत्वंकुतइतिवाच्यं। स्थाणुमन्येनुसंयंतीत्यव्यवहितपूर्ववाक्येजीवानांप्रस्तुतत्वेनतेषामेवैष्वित्यनेनपरामर्शादित्यर्थः । यएषुसुप्तेष्वित्यत्रसंसारिजीवस्थ ब्रह्मस्वरूपंनिरूप्यते। प्रश्नवाक्येतुमुक्तस्यनियामकोहरिर्विषयस्तथाचप्रश्नपरिहारयोरनानुगुण्यमेवेत्यतोजीवेष्वितिसामान्येनोक्तं। मुक्तामुक्तजीवमात्रस्थितभगवतःप्रश्नविषयत्वादत्रामुक्तजीवस्थभगवन्निरूपणंनप्रश्नाननुगुणमितिभावः।नन्वेतत्पूर्वोत्तरविरुद्धं। मुक्तेस्थितोभगवान्पृच्छ्यतइतिप्रागुक्तं। इदानींजीवेषुस्थितोभगवान्पृच्छ्यतइत्युच्यतेइत्यतस्तंविरोधंप्रश्नवाक्याभिप्रायकथनेनपरिहरति॥मृतेति॥विवक्षितो येयंप्रेतइतिप्रश्नवाक्यइतिशेषः।प्रेतंशब्दस्यउभयसाधारणत्वादितिभावः। नकेवलंप्रश्नानानुगुण्याभावः।किंतुविरोधश्चनास्तीतिचशब्दार्थः।यद्वायदियेयंप्रेतइत्यत्रमुक्तनियामकभगवत्स्वरूपंप्रश्नविषयःस्यात्तर्हि हंततइदंप्रवक्ष्यामि गुह्यंब्रह्मसनातनं।यथामरणंप्राप्यआत्माभवतिगोतमेतिम्रियमाणजीवस्थभगवत्स्वरूपवचनेप्रतिज्ञाविरुद्धास्यात्। पृष्टस्यैववक्तव्य

भाष्यं ॥ स्थाणुमन्येनुसंयंतियथाकर्मयथाश्रुतमित्युक्त्वा । यएषुसुप्तेषुजागर्तिकामंकामंपुरुषोनिर्मिमाणइतिवचनाच्चजीवेषुस्थितोभगवान्पृच्छ्यतइतिसिद्धं । मृतजीवेस्थितश्चोभयात्मकोभगवान्विवक्षितइत्येतस्माच्चाविरोधः ।

त्वादितिचेत् न। मुक्तेरपिमरणात्मकत्वादित्युक्तन्यायेनमरणंप्राप्येतिमरणशब्दस्यापिमुक्तिपरत्वोपपत्तेर्विरोधाभावात्। प्रकारांतरेणाप्यविरोधमाह॥मृतजीवे इति॥ पूर्वोक्तपरिहारसमुच्चयार्थश्चशब्दः। अविरोधो मरणंप्राप्येतिवचनस्यप्रश्नवाक्येनेतिशेषः। ननु यदुक्तं यएषुसुप्तेष्वितिवचनात्प्रश्नवाक्यस्यभगवद्विषयत्वमिति। तदसत्। तस्यैववाक्यस्येश्वरविषयत्वाभावात्। नहितत्रेश्वरज्ञापकंकिंचिदस्तीतिचेत्।न।सुप्तेषुजागर्तीतीश्वरलिंगश्रवणात्स्वाप्नपदार्थनिर्मातृत्वश्रवणाच्च। नचतत्रनिर्मातृत्वमात्रश्रवणेपिस्वाप्नपादार्थनिर्मातृत्वंनश्रूयतइतिवाच्यं। भुंजानोनोत्सृजेद्वाचमित्यादाविवप्रकरणप्राप्तत्वात्। हंततइदंप्रवक्ष्यामिगुह्यंब्रह्मसनातनमितिप्रतिज्ञातस्यैवात्रकथनाच्च। तदेवशुक्रंतद्ब्रह्मेतिवाक्यशेषाच्च। ननुवाक्यशेषेयोजीवः एषु प्राणेषु सुप्तेषु कामंकामं तंतमभिप्रेतंरूयाद्यर्थमविद्ययानिर्ममाणोजागर्ति नस्वपिति तदेवशुक्रंशुद्धं ब्रह्मनान्यत्गुह्यंब्रह्मास्तीतिब्रह्मैक्यमेवजीवस्योच्यतइतिकथं तत्साधकंइति चेत्न।तस्यदूष्यत्वात्।तस्मिँल्लोकाःश्रिताःसर्वइत्युक्तविशिष्टेजीवैक्यानंगीकाराच्च।लक्षणाचागतिकागतिः। किंचैषुसुप्तेष्वित्यत्रैतच्छब्देन स्थाणुमन्यइत्यव्यवहितपूर्ववाक्यप्रकृतजीवपरामर्शइत्येवयुक्तं। नतुसर्वात्मनाअप्रकृतप्राणपरामर्शइति। नचग्रंथप्रकृतपरामर्शेसंभवतिबुद्धिस्थपरामर्शोयुक्तः। अतएवोक्तंस्थाणुमन्येनुसंयंतियथाकर्मयथाश्रुतमित्युक्त्वेति। ननुहंततइदंप्रवक्ष्यामीतिप्रतिज्ञावाक्ये गुह्यंसनातनंब्रह्मस्वाविद्ययामरणंप्राप्यात्मासंसारीयथाभवति तथाप्रवक्ष्यामीत्युक्तत्वेनात्रापितदेवबोध्यतइतिव्याख्येयमितिचेत् न। मरणंप्राप्येत्यस्यम्रियमाणंजीवंप्राप्येत्यर्थोपपत्तेरितिभावेनश्रुत्यर्थनिश्चायकंप्रमाणमाह ॥

गुह्यमिति ॥ अपिशब्दौचशब्दार्थौवाक्यद्वयार्थसमुच्चयार्थौ । यद्वा म्रियमाणमपीत्यन्वयः । तेनजायमानमित्यस्यसमुच्चयः । एतेनगुह्यंतत्परमंब्रह्मेत्यारभ्ययोनिमन्यइत्यादेस्तात्पर्यमुक्तं । स्वपितेष्वपिजीवेषुजागर्तीत्यनेन । यएषुसुप्तेष्विति वाक्यार्थउक्तोभवति । सुप्तेषुजीवेष्वित्युक्त्याएषुप्राणेष्वित्येतदपव्याख्यानमित्युक्तंभवति । नकेवलंजागरितेषु सुप्तेष्वपीत्यपिशब्दः । नन्वेतद्विद्यामनुशिष्टस्त्वयाहमितिनचिकेतसाजीवगतभगवत्स्वरूपेपृष्टे नहिसुज्ञेयोणुरेषधर्मइतियमेनधर्मस्याणुत्वेनसुज्ञेयत्वाभावकथनंअसंगतं । नहिधर्मस्वरूपंनचिकेतसापृष्टमित्यतोधर्मशब्दंव्याचष्टे ॥ **धारकत्वादिति** ॥ सर्वजगद्धत्तइतिधर्मः । पृथिवीधर्ममूर्धनीतिप्रयोगान्मोक्षधर्मे । धर्मोवाइदमग्रआसीदित्यादिश्रुतेश्चेतिभावः । ननुनचिकेतोमरणंमानुप्राक्षीरितियमेनमरणंनप्रष्टव्यमितिकथमुच्यते । नहिनचिकेतसामरणंपृष्टं किंतुमृतस्थोमुक्तस्थोवाभगवानेवेत्यतस्तदपियथावद्व्याचष्टे ॥ **मरणइति** ॥ म्रियमाणइत्यर्थः । एतेनमरणंमरणसंबंधिप्रश्नंप्रत्यस्तिनास्तीत्येवंरूपंमानुप्राक्षीरितिव्याख्यानमसदित्युक्तंभवति । मरणशब्दस्यलाक्षणिकत्वापातात् । अस्मत्पक्षेतुमरणशब्दस्यतदंतर्गतभगवद्वाचकत्वात् । प्रश्नस्यप्रश्नविषयत्वाभावेनप्रश्नंमानुप्राक्षीरित्यस्यायोगाच्चेति । किंचैतद्विद्यामनुशिष्टस्त्वयाहमित्यत्रमुक्तस्थोभगवानेवविषयइत्यंगीकर्तव्यं । यस्मि

---

भाष्यं ॥ गुह्यंतत्परमंब्रह्मशीर्यमाणंशरीरिणं । संप्राप्तमपिजीवेषुजागर्तिस्वपितेष्वपीतिब्रह्मांडे । धारकत्वाद्धर्मोभगवान् । मरणेस्थितंभगवंतंमानुप्राक्षीः । महतिसांपरायेमुक्तौ ॥ प्रथमाध्यायस्यप्रथमावल्ली ॥ १ । १ ॥

|| १० ||

न्निदंविचिकित्संतिमृत्योसांपरायेमहतिब्रूहिनस्तदित्युत्तरवाक्येयस्मिन्महतिसांपरायेइदंब्रह्मास्तिनवेतिविचिकित्संति तद्ब्रूहीति प्रार्थनादितिभावेनमहतिसांपरायइत्यस्यार्थमाह ॥ महतीति ॥ सांपरायशब्दस्यश्रेयोमात्रवाचकत्वेपिमहच्छब्दसमानाधिकृत स्यमुक्तिवाचकत्वोपपत्तेरित्यर्थः ॥ प्रथमाध्यायस्यप्रथमावल्ली ॥ १ । १ ॥ ततश्चोशन्हवाइत्यादेरेवमक्षरयोजना ॥ उशन् स्वर्गलोकमिच्छन् । वाजश्रवसःनप्ता वाजश्रवोनप्ता । सर्ववेदसं सर्वस्वदक्षिणां ददौ । हवाइतिनिपातौवृत्तार्थस्मारणार्थौ । निरिंद्रियागाश्चददावितिशेषः । तस्यऋषेर्नचिकेतानामपुत्रआस हकिल । तंसंतंकुमारं तासुगोषु दक्षिणासुनीयमानासु दक्षिणात्वेनदीयमानासुसतीषु । श्रद्धा पितुर्हितकामप्रयुक्तास्तिक्यबुद्धिराविवेश । हेत्याश्चर्ये । कुमारस्यापिश्रद्धाजातेति । सआविष्टश्रद्धोनचिकेताएवममन्यत । कथं पीतमेव नतुपातव्यमुदकंयाभिस्ताः पीतोदकाः । जग्धंभक्षितमेव नतुभक्षणीयं तृणंयासांताजग्धतृणाः । दुह्यतइतिदोहःक्षीरं । दुग्धमेवदोहो नतुदोह्यमस्तियासांतास्तथोक्ताः । निरिंद्रियाश्चक्षुःपादादींद्रियशून्याः । अप्रजननसमर्थावा । यागावस्तादददत् प्रयच्छन्यःपुरुषः स ये ते प्रसिद्धाः अनंदानामलोकास्तान्गच्छतीति । अत्रप्रामादिकैकगोदानव्यावृत्त्यर्थंपीतोदकाइत्यादिबहुवचनं । नन्वन्यत्रानंदशब्दस्तमःपरतयाव्याख्यातः । यथोक्तं । नि

---

उप० ॥ श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकश्रीलक्ष्मीहयग्रीवायनमः ॥ हरिः ॐ । उशन्हवैवाजश्रवसस्सर्ववेदसंददौ । तस्यह नचिकेतानामपुत्रआस । तंहकुमारंसंतंदक्षिणासुनीयमानासुश्रद्धाविवेश ॥ १ ॥ पीतोदकाजग्धतृणादुग्धदोहानिरिंद्रियाः । अनंदानामतेलोकास्तान्सगच्छतितादददत् ॥ २ ॥

त्यदुःखस्वरूपत्वादनंदंतत्तमोमतमिति । तत्कथमेतादृग्गोदानमात्रेणतमःप्राप्तिरिति । सत्यं अत्रापिगोदानकर्तुस्तमोयोग्यत्वे नंदशब्दस्यतमःपरत्व मन्यथातादृगनित्यनरकपरत्वमित्यंगीकारादिति ॥ २ ॥ तएतादृशगोदानकर्तुरेवमनर्थः अयंचतादृशीरेवगाःप्रयच्छति । अतोस्यानर्थोभविष्यति । पुत्रेणचसतामयासपरिहर्तव्यइतिमन्यमानःसकुमारोमांदत्वापि ते नगावोदातव्याईदृश्यइतिभावेन पितरमुवाच । किमिति । हेतात मांकस्मैदास्यसीति । एवमुक्तेबालकत्वात्यत्किंचिद्वदतीतिमन्यमाने नपित्रोपेक्ष्यमाणःसद्वितीयंतृतीयंद्विवारंत्रिवारमप्येवमेवोवाच । नायंबालकस्वभावइतिमत्वाक्रुद्धःसन् तं कुमारं प्रत्युवाच । किमिति । त्वा त्वां मृत्यवे यमाय दास्यामीति। त्वंम्रियस्वेतिशशाप। उपलक्षणमेतत्। मृत्वामृत्योर्गृहान्गच्छ। तदापि प्रवसंतंमृत्युंप्रतिगंतासि । तस्यगृहेतिस्रोरात्रीरनश्नन्नेववसतात्। सदेशांतरादागतोयमोयदित्वांपृच्छेत्। कुमार कतिरात्रीरवात्सीरिति तदातिस्रइतिप्रतिब्रूयात्। किंप्रथमरात्रावाश्नाइतियदिपृच्छेत्तदातेप्रजामितिप्रतिब्रूतात्। किंद्वितीयरात्रावाश्नाइतिपृच्छेत्तदापशूंस्तइतिप्रतिब्रूयात्। किंतृतीयरात्रावाश्नाइतिपृच्छेत्साधुकृत्यांतइतिप्रतिब्रूतादितिशशापेतिग्राह्यं। एतादृशंपुत्रंप्रत्यपिसाक्षात्पिताप्येवमुक्तवानितिआश्चर्यद्योतनायहेत्युक्तं ॥ ३ ॥ एवंशप्तःपुत्रआह ॥ बहूनामिति ॥ यद्यप्यहमद्यबहूनांपुरुषाणांमध्येप्रथमोमुख्यःसन्यममेमि। वर्तमानसामीप्याद्वर्तमानव्यपदेशः । एवंबहूनांपुरुषाणांमध्यमःसन्वायममेमि । तथापियमोम

उप० ॥ सहोवाचपितरंततकस्मैमांदास्यसीतिद्वितीयंतृतीयं । तंहोवाचमृत्यवेत्वाददानीति ॥ ३ ॥ बहूनामेमिप्रथमोबहूनामेमिमध्यमः । किंस्विद्यमस्यकर्तव्यंयन्मयाद्यकरिष्यति ॥ ४ ॥

यायत्करिष्यति तत्कर्तव्यं यमस्यकिंस्वित्किमेव नकिमपि । तथाचव्यर्थमेवत्वदीयंदानमितिभावः । अप्रयोजकतयागमनेत्वयानतस्यप्रयोजनमित्यतउक्तंप्रथमःसन्नेमीति । मुख्यत्वेनाऽऽगतस्यशुश्रूषाद्यनंगतयानतस्यत्वयाप्रयोजनमित्यतउक्तंमध्यमःसन्निति। तच्छुश्रूषकाणांनियतत्वेनतन्मध्येममप्रवेशायोगादितिभावः ॥ ४ ॥ त्वदीयंदानंव्यर्थंभवतीत्येवममक्लेशो नतुममरणंदत्तमिति । देहिनांमरणस्यनियतत्वादितिभावेनाह ॥ **अनुपश्येति** ॥ हेपितस्त्वंयथापूर्वेदेहिनःसर्वेमृताअभवन् तदनुपश्यविजानीहि । पूर्वेषांमृतत्वेप्यपरेषांमरणंकुतइतिचेत् यथापूर्वेमृतास्तथाऽपरेमरिष्यंतीतिप्रतिपश्यविजानीहि। देहित्वाविशेषादितिभावः । देहिनांमरणंनियतमित्येतमर्थंदृष्टांतेनसाधयति ॥ **सस्यमिवेति** ॥ यथासस्यंपच्यतेपरिपक्वंभवति । ततश्चजीर्यते । एवंमर्त्योपिजरादिनापरिपक्वस्सन्नश्यतीत्यर्थः । नघटादिवत्देहिनःसर्वथानाशइतिलभ्यते सस्यदृष्टांतकथनेन । यद्वादेहिनांमरणस्यनियतत्वेपिबाल्यावस्थायामेवेतिनियमाभावात् बालकस्यममत्वयामरणंदत्तमित्यपिनक्लेशइतिभावेनाह ॥ **सस्यमिवेति** ॥ अवश्यंभाविन्यर्थेकाव्यथेतिभावः ॥ ५ ॥ सबालएवंपितृसन्निधावुक्त्वातंप्रवसंतंयमंप्रतिजगाम । यमेप्रवासायगतेतद्गृहंप्रतिजगामेतियावत् । अतस्तस्यपत्न्यासंपूज्यमानोप्यर्घ्यादिकंनजग्राह । सचयमागमनमेवावेक्षणमाणस्तस्यगृहेतिस्रोरात्रीरनश्नन्नेवोवास । ततोयमोलोकांतरादागतइतिमध्येवक्तव्यं ॥ ७ ॥ आगतेतुयमेयमभार्यायमंप्रत्याह ॥ **वैश्वानरइति** ॥

---

उप० ॥ अनुपश्ययथापूर्वेप्रतिपश्यतथापरे । सस्यमिवमर्त्यःपच्यतेसस्यमिवजायतेपुनः ॥ ५ ॥ वैश्वानरःप्रविशत्यतिथिर्ब्राह्मणोगृहान् । तस्यैतांशांतिंकुर्वंतिहरवैवस्वतोदकं ॥ ६ ॥

हेवैवस्वत विवस्वतःसूर्यस्यपुत्र । अतिथिर्ब्राह्मणःगृहिणांगृहान्वैश्वानरोअग्निःसन्प्रविशति । अतस्तस्यातिथिरूपवैश्वानर
स्यैतां श्रुत्याद्युक्तां अर्घ्यादिरूपां शांतिंशांतिकारणं कुर्वन्ति । अन्यथावैश्वानरेणेवातिथिनादाहःस्यात् । अतोअर्घ्याद्यर्थमुद
कंहरआहर ॥ ६ ॥ किंचानश्नन्ब्राह्मणोयस्याल्पमेधसःपुरुषस्यगृहेवसतिएततएतस्यआशाप्रतीक्षे । अप्राप्तस्यप्राप्त्यर्थ मिच्छाआ
शा । इदमेतस्मिन्कालेसिध्यतीतिनिश्चित्यतत्कालप्रतीक्षणंप्रतीक्षातेआशाप्रतीक्षे संगतं सुहृत्संगतं सूनृतांच साध्वींवाणीमिष्टा
पूर्तेइष्टापूर्तजन्यंफलं सर्वान्पुत्रपशूंश्च वृङ्क्तेछेदयति । अयंचमत्कृतांपूजांअगृह्णन्नेवास्तइति ॥७॥ एवमुक्तोयमस्तंकुमारंपप्रच्छ ।
कुमारकतिरात्रीरवात्सीरिति । तिस्रइतिप्रत्युवाच । किंप्रथमांरात्रिमाश्नाइति प्रजांतइति किंद्वितीयामिति पशूंस्तइति किंतृ
तीयामिति साधुकृत्यांतइतीतिशाखांतरोक्तंग्राह्यं ॥ ७ ॥ एवंकुमारोक्तोयमआह ॥ तिस्रइति ॥ हेब्रह्मन्नमस्योनमस्कारार्हो
तिथिस्त्वं यत्यस्मान्मेममगृहेतिस्रोरात्रीरनश्नन्नेवावात्सीर्वासमकार्षीस्तस्मात्हेब्रह्मन्तेतुभ्यंनमोस्तु मेमह्यंस्वस्त्यस्तुमंगलमस्तु
प्रति तस्यप्रतीकाराय । त्रीन्वरान्वृणीष्व ॥ ८ ॥ एवमुक्तोनचिकेताःप्रथमंवरंवृणोति ॥ शांतसंकल्पइति ॥ मृत्योगौतमो
गोतमगोत्रापत्यंममपिता । मामभिमांप्रति वीतमन्युर्विगतकोपो तएव मदनिष्टेशांतसंकल्पः सुमनाःप्रसन्नमनाश्च यथास्यात् । किंच ॥ १२ ॥

उप० ॥ आशाप्रतीक्षेसंगतंसूनृतांचेष्टापूर्तेपुत्रपशूंश्चसर्वान् । एतद्वृङ्क्तेपुरुषस्याल्पमेधसोयस्यानश्नन्वसतिब्राह्मणोगृहे ॥ ७ ॥ तिस्रोरात्रीर्यद
वात्सीर्गृहेमेअनश्नन्ब्रह्मन्नतिथिर्नमस्यः । नमस्तेस्तुब्रह्मन्स्वस्तिमेस्तुतस्मात्प्रतित्रीन्वरान्वृणीष्व ॥ ८ ॥ शांतसंकल्पस्सुमनायथास्याद्वीतमन्युर्गौ
तमोमाभिमृत्यो । त्वत्प्रसृष्टंमाभिवदेत्प्रतीतएतत्त्रयाणांप्रथमंवरंवृणे ॥ ९ ॥

त्वत्प्रसृष्टंत्वयाप्रेषितंमांप्रतीतःसएवायंपुत्रइतिप्रत्यभिजानन्यथाभिवदेत्सम्यग्वदेत् । एतत्पूर्वोक्तत्रयाणांवराणांमध्येप्रथमंव
रंवृणे ॥ ९ ॥ एवमुक्तोयमस्तथाभवत्वित्याह ॥ **यथेति** ॥ औद्दालकिरुद्दालकएवऔद्दालकिः । उद्दालकस्यापत्यंपुमानितिवा ॥
औद्दालकि रारुणिररुणायाअपत्यंपुमानारुणिस्तवपितामृत्युमुखात्प्रमुक्तंत्वांददृशिवान्पश्यन्मत्प्रसृष्टोमत्प्रेरितोवीतमन्युःसन्पु
रस्तात्पूर्वंत्वांप्रतियथायेनप्रकारेणावर्त्तत तथाभविता । प्रतीतःप्रत्यभिज्ञावांश्चभविता । रात्रीःसुखंशयिता । अत्रयथापुरस्ताद्भवि
तेत्यनेन सुखंरात्रीःशयितेत्यनेनच शांतसंकल्पत्वंसुमनस्कत्वंचोक्तंभवति ॥ १० ॥ नचिकेताद्वितीयंवरंप्रार्थयितुमाह ॥ **स्वर्ग**
**इति** ॥ हेमृत्योस्वर्गेलोकेभयं किंचन किमपिनास्ति । क्षुद्रभयाभावेपिमरणंस्यादित्यतउक्तं । नतत्रत्वमिति । नतत्रमन्वंतरका
लपर्यंतंमृत्युरस्तीत्यर्थः । जरयानबिभेति । अशितुमिच्छाअशनाया पातुमिच्छापिपासा तेउभेतीर्त्वा शोकमतिक्रम्यगच्छतीतिशोका
तिगःस्वर्गलोकेमोदते ॥ ११ ॥ किंततइत्यतआह ॥ **सत्वमिति** ॥ हेमृत्योसत्वंममवरदातात्वंस्वर्ग्यंपूर्वोक्तमाहात्म्यवत्स्वर्ग
साधनीभूतमग्निं मग्निस्थमग्र्यत्वादग्निनामानंविष्णुमध्येषि अधिकंजानासि तंश्रद्दधानायमह्यंप्रब्रूहि सम्यक्कथयेत्येतत्द्वितीयेन
वरेणवृणे । नकेवलंज्योतिष्टोमाग्निस्थविष्णुज्ञानिनःस्वर्गएवफलं । किंतुस्वर्गप्राप्त्यनंतरंमोक्षोपीत्याह ॥ **स्वर्गलोकाइति** ॥ स्वर्गो

---

उप० ॥ यथापुरस्ताद्भविताप्रतीतएतऔद्दालकिरारुणिर्मत्प्रसृष्टः । सुखंरात्रीश्शयितावीतमन्युस्त्वांददृशिवान्मृत्युमुखात्प्रमुक्तं ॥ १० ॥
स्वर्गेलोकेनभयंकिंचनास्तिनतत्रत्वंनजरयाबिभेति । उभेतीर्त्वाअशनायापिपासेशोकातिगोमोदतेस्वर्गलोके ॥ ११ ॥ सत्वमग्निंस्वर्ग्यमध्येषिमृत्यो
प्रब्रूहित्वंश्रद्दधानायमह्यं । स्वर्गलोका

लोकोयेषांतेस्वर्गलोकाःस्वर्गेविद्यमानाजनावाअमृतत्वंमोक्षंक्रमाद्भजंते ॥ एवमुक्तोयमआह ॥१२॥ **प्रतेब्रवीमीति** ॥ हेनचिकेतः स्वर्ग्यंस्वर्गसाधनीभूतमग्निमग्निस्थमग्निनामकंभगवंतंप्रकर्षेणजानन्नहंतेतं ब्रवीमि । त्वंतुमेममसकाशात्तत्त्वदीप्सितंवस्तुनिबोध विजानीहि । एवंप्रतिज्ञायाग्निस्थभगवत्स्वरूपमाह ॥ **अनंतेति** ॥ हेनचिकेतस्त्वं एतंत्वयापृष्टमग्निस्थंअग्निनामकंभगवंतं अनंत लोकाप्तिं अनंतस्यलोकआप्यतेयेनेति अनंतलोकआप्यतेयेनेतिवा अनंतलोकाप्तिस्तं । अथोइतिविशेषणांतरसमुच्चयार्थः । प्रति ष्ठांसर्वलोकस्यधारकं । गुहायांसर्वेषांहृद्गुहायां । निहितंविद्धिजानीहि ॥ १३ ॥ श्रुतिःस्वयमाह ॥ **लोकादिमिति** ॥ तंनचि केतसापृष्टंलोकादिंसर्वलोकादिं । अग्निमग्निस्थंभगवंतं तस्मैनचिकेतसे यमउवाच । नकेवलमेतावत् । किंतुइष्टकाःइष्टकादेवताः याः यत्स्वरूपाः यावतीर्यावत्योयावत्संख्याकाः यथावा येनैवप्रकारेणज्ञातव्याःयत्परिमाणकावा तत्सर्वमप्युवाचेत्यर्थः । एवमु पदिष्टःसबालोनचिकेताःतत्मृत्युप्रोक्तंभगवत्स्वरूपं । मृत्युनायथोक्तंतथैव । प्रत्यवदत्अनूदितवांश्च । अथानुवादानंतरमस्यन चिकेतसस्तुष्टःप्रसन्नोमृत्युःपुनराह ॥ १४ ॥ किमाहेत्यतउक्तमनुवदन्नाह ॥ **तमिति** ॥ यद्वायदाहतत्प्रीत्यनंतरमेवाहनतुका



---

उप ॥ अमृतत्वंभजंते । एतद्द्वितीयेनवृणेवरेण ॥ १२ ॥ प्रतेब्रवीमितदुमेनिबोधस्वर्ग्यमग्निंनचिकेतःप्रजानन् । अनंतलोकाप्तिमथोप्रतिष्ठां विद्धित्वमेतंनिहितंगुहायां ॥१३॥ लोकादिमग्निंतमुवाचतस्मैयाइष्टकायावतीर्वायथावा । सचापितत्प्रत्यवदद्यथोक्तमथास्यमृत्युःपुनराहतुष्टः ॥१४॥

लांतरइत्याह ॥ **तमिति** ॥ प्रीयमाणोमहात्मायमस्तंनचिकेतसंप्रत्यब्रवीत् । किं । तवाद्येहप्रीतिनिमित्तंवरंभूयोददामि । तंवरं दर्शयति ॥ **तवैवेति** ॥ अयंमदुपदिष्टोग्निस्तवैवनाम्नाप्रसिद्धोभविता । इमामनेकरूपांस्वर्णमयीं शृंकांकंठमालांच गृहाणेति वरमदात् ॥ १५ ॥ अनंतलोकाप्तिमित्यनेनाग्निस्थभगवज्ज्ञानमनंतलोकाप्तिसाधनमित्युक्तं । तत्रतत्ज्ञानमेवकथंस्यादित्याशंकां परिहरन्ननंतलोकाप्तिमित्युक्तंविवृणोति ॥ **त्रिनाचिकेतइति** ॥ नचिकेतसोयंनाचिकेतः त्रिशश्चितोनाचिकेतोग्निर्येनसःत्रिनाचिकेतः त्रिकर्मकृत्यज्ञदानतपःकर्त्ता त्रिभिःऋग्यजुःसामाख्यैर्वेदैः संधिंसंधानमेत्य वेदैरविरुद्धोभूत्वा वेदोक्तप्रकारेणभगवत्तत्वादिकंज्ञात्वेतियावत् । जन्ममृत्यूतरति । नवेदोक्तप्रकारेणभगवज्ज्ञानमपिसाक्षान्मोक्षसाधनं किंतुमननादिद्वारैव । मोक्षोपि नजन्ममृत्यूत्तरणरूपएव । किंतुसुखरूपश्चेतिभावेनप्रकारांतरेणाप्यग्निस्थभगवज्ज्ञानंमोक्षसाधनमित्याह ॥ **ब्रह्मजज्ञमिति** ॥ ब्रह्मणोवेदाज्जायतेअभिव्यज्यतइतिब्रह्मजः सर्वंजानातीतिज्ञः । ब्रह्मजश्चासौज्ञश्चेतिब्रह्मजज्ञस्तं देवंक्रीडादिगुणसंपन्नं ईड्यंस्तुत्यं तंविदित्वानिचाय्यविचार्य तथाऽपरोक्षतोनिश्चित्येमामत्यंतशांतिंआत्यंतिकसुखरूपांशांतिंमुक्तिमेति । मोक्षश्शांतिश्चशरणं निर्वाणंचाभिधीयतइतिवचनात् ॥ १६ ॥ नकेवलमग्निस्थभगवज्ज्ञानमेवमोक्षसाधनं । किंतुयाइष्टकाइत्याद्युक्तेष्टकादेवताज्ञान

---

उप । तमब्रवीत्प्रीयमाणोमहात्मावरंतवेहाद्यददामिभूयः । तवैवनाम्नाभवितायमग्निःशृंकांचेमामनेकरूपांगृहाण ॥ १५ ॥ त्रिनाचिकेतस्त्रिभिरेत्यसंधिंत्रिकर्मकृत्तरतिजन्ममृत्यू । ब्रह्मजज्ञंदेवमीड्यंविदित्वानिचाय्येमांशांतिमत्यंतमेति ॥ १६ ॥

मपीत्याह ॥ **त्रिनाचिकेतइति** ॥ त्रिवारकृतनाचिकेतः त्रयमेतत् याइष्टकायावतीर्वायथावेत्युक्तेष्टकादेवतांविष्णुं तत्संख्यांष ष्ट्युत्तरशतत्रयलक्षणां तत्परिमाणंचविदित्वा शांतिमत्यंतमेतीतिपूर्वेणसंबंधः । इदानीमुक्तरीत्याजानन् कर्मकर्ता योग्यश्चेद्भवति सायुज्यंचतस्यफलमित्याह ॥ **यएवमिति** ॥ योधिकारीएवमुक्तप्रकारेणाग्निस्थविष्णुंविद्वान् नाचिकेतमग्निंचिनुते त्रिशइति शेषः । सपुरतःप्रथमतो मृत्युपाशान् संसारमितियावत् । प्रणोद्यशोकातिगःसन् स्वर्गलोके आनंदज्ञानप्रकाशरूपेविष्णौप्रविष्टः सन्मोदते । स्तोममहदुरुगायंप्रतिष्ठामित्युत्तरत्रमोक्षप्रवेशार्थकप्रतिष्ठाशब्दस्यपूर्वोक्तपरामर्शरूपत्वस्यभाष्येउक्तत्वात् अन्यस्यत त्परामृश्यस्यपूर्वमभावात् स्वर्गलोकइत्येतदेवतत्परामृश्यमिति एवंव्याख्यातं । यद्वा योधिकारीउक्तरीत्याविद्वान् कर्मकरोतित स्यसर्वस्यापिउक्तंफलंभवतीत्याह ॥ **एवमिति** ॥ स्वर्गलोकेप्रसिद्धेमोदते । तदनंतरंक्रमात् स्वर्गलोकेविष्णुलोके मोदतइतिव्या ख्येयं । नचायंस्वर्गलोकःप्रसिद्धएव । स्वर्गलोकाअमृतत्वंभजंतइत्युपक्रमात् ॥ १७ ॥ प्रीत्यास्वदत्तंवरमवधारयति ॥ **एषइ ति** ॥ त्वंयंद्वितीयवरेणावृणीथाः एषस्वर्ग्योग्नि र्नाचिकेतइति तेतव नाम्नाप्रसिद्धोभविता । कथं । एतमग्निंतवैव ताम्ना जना सोजनाः प्रवक्ष्यंति । एवंद्वितीयंवरंदत्वाप्रीत्यास्वदत्तंवरंचावधार्येदानींतृतीयंवरंप्रार्थयेत्याह ॥ **तृतीयमिति** ॥ १८ ॥ एवमु क्तोनचिकेताःतृतीयंवरंवृणोति ॥ **येयमिति** ॥ प्रेतेमुक्तेमृतेवामनुष्येऽयंभगवान्नियामकत्वेनास्तीत्येकेज्ञानिनोवदंतीतिशेषः ।



उप । त्रिनाचिकेतस्त्रयमेतद्विदित्वायएवंविद्वांश्चिनुतेनाचिकेतं । समृत्युपाशान्पुरतःप्रणोद्यशोकातिगोमोदतेस्वर्गलोके ॥ १७ ॥ एषतेग्निर्ना चिकेतस्स्वर्ग्योयमवृणीथाद्वितीयेनवरेण । एतमग्निंतवैवप्रवक्ष्यंतिजनासः तृतीयंवरंनचिकेतोवृणीष्व ॥ १८ ॥ येयंप्रेतेविचिकित्सा

नास्तीत्यज्ञावदंति । अतोविप्रतिपत्तेर्विचिकित्सासंशयोस्ति । किमिति । प्रेतेमनुष्येऽयंभगवान्नियामकत्वेनास्तिनवेति । किंततः। इयंविचिकित्सा या यद्विषया एतत्संशयविषयीभूतस्यमुक्तामुक्तनियामकस्यस्वरूपं । त्वयानुशिष्टोयथावद्विद्यांजानीयां । एष एवत्वद्दत्तानांवराणांमध्येतृतीयोवरोवृतोमयाप्रार्थितः ॥ १९ ॥ एवमुक्तोयमोमुक्तामुक्तजीवनियामकभगवज्ज्ञानमेवमोक्षसाधनं तच्चातिगोप्यं अतःश्रोतुर्बुद्धिदार्ढ्याभावेनवक्तव्यमितिभावेन तद्बुद्धिपरीक्षणाय तस्यदुर्ज्ञेयत्वमाह ॥ देवैरिति ॥ हेनचिकेतः पुरापूर्वं मत्रमुक्तामुक्तजीवनियामकभगवद्विषये देवैरपिविचिकित्सितं । कुतः हियस्मादेषधर्मोधारकत्वाद्धर्मनामाभगवान् सुज्ञेयोन । कुतः यतोणुःसूक्ष्मः तस्मादन्यंवरंवृणीष्व । मामां मोपरोत्सीरिदमेववक्तव्यमित्युपरोधंमाकार्षीः मामांप्रति एनंवरं अतिसृजविमुंचेत्यर्थः ॥ २० ॥ एवमुक्तोनचिकेतआह ॥ देवैरिति ॥ हेमृत्योत्वमेव यत्यस्मात् देवैरपि अत्रविचिकित्सितं किलेतिपुरावृत्तद्योतनार्थः । अतएवभगवत्स्वरूपंसुज्ञेयंनभवतीत्यात्थ । तस्मात्सएववरोमयार्थितोनान्यः । कुतइत्यतएतत्सदृशस्याभावादित्याह ॥ नान्यइति ॥ अयमेववरोऽन्यस्मात्संपाद्यतांइत्यतआह ॥ वक्ताचेति ॥ २१ ॥ एवमुक्तोयमःसर्वात्मना विषयविरक्तस्यैवमोक्षशास्त्रेधिकारइतिज्ञापनायनचिकेतसःस्थैर्यनिरीक्षणायनानाविषयैस्तंप्रलोभयति ॥ शतायुषइत्यादिना॥

उप । मनुष्येअस्तीत्येकेनायमस्तीतिचैके । एतद्विद्यामनुशिष्टस्त्वयाहंवराणामेषवृतस्तृतीयः ॥१९॥ देवैरत्रापिविचिकित्सितंपुरानहिसुज्ञेयोणुरेष धर्मः । अन्यंवरंनचिकेतोवृणीष्वमामोपरोत्सीरतिमासृजैनं ॥२०॥ देवैरत्रापिविचिकित्सितंकिलत्वंचमृत्योयन्नसुज्ञेयमात्थ । वक्ताचास्यत्वादृगन्यो नलभ्योनान्योवरस्तुल्यएतस्यकश्चित् ॥ २१ ॥ शतायुषः

शतंवर्षाण्यायूंषियेषांतेशतायुषस्तान्पुत्रपौत्रान्वृणीष्व। बहून्पशून्गोमहिष्यादिरूपान्। हस्तीहिरण्यंचहस्तिहिरण्यमितिद्वंद्वैकवद्भावः। अश्वान् भूमेर्महदायतनंच भूमेरितिपंचमीसप्तम्यर्थे । महद्विस्तीर्णमायतनमाश्रयंमहाराज्याधिपत्यमितियावत्। वृणीष्व। नकेवलंपुत्रपौत्राणामेवशतायुष्ट्वं किंतु स्वयंचयावज्जीवितुमिच्छसि तावतीःशरदोजीव। सर्वमेतदनर्थकं स्वयंचेदल्पायुरित्यतोवाह ॥ स्वयंचेति ॥ २२ ॥ नन्वेवंत्वद्दत्तोवरोमृषैवजातः मत्प्रार्थितस्यत्वयाअदानादित्यतआह ॥ एतत्तुल्यमिति ॥ त्वदीयंवरमेतत्तुल्यंएतस्यमयादीयमानस्यसमंयदिमन्यसे तर्हिदीयमानंवित्तंचिरजीविकांचदीर्घजीवनहेतुक्षेत्रंदीर्घजीवनंवा उक्तोपलक्षणमेतत्। वृणीष्व। नचेदन्यदपिदास्यामीत्याह ॥ महाभूमाविति ॥ हेनचिकेतः त्वं महाभूमौ निमित्तसप्तमीयं। महाराज्याधिपत्येसतीतियावत् । एधिअभिवृद्धोभव । त्वांकामानांकाम्यानांमध्येकामितभाजंकरोमीत्यर्थः ॥ २३ ॥ एतदेव विवृणोति ॥ येयइति ॥ कामाःकाम्याः छंदतइच्छानुसारेण । तानेवविशिष्याह ॥ इमाइति ॥ रथेनसहवर्ततइतिसरथाः सतूर्याःसवादित्रा इमारूपादिगुणवतीः मल्लोकस्थावा रामारमणीयाःस्त्रियः प्रार्थयस्व। तासुविशेषमाह ॥ नहीदृशाइति ॥ तर्ह्येताादृशीभिःकिंमेप्रयोजनमित्यतआह ॥ आभिरिति ॥ मत्प्रत्ताभिर्मद्दत्ताभिराभिःस्त्रीभिःपरिचारयस्वनृत्तगानादिनात्मनःपरिचर्याकारय। हेनचिकेतोमरणंमरणेस्थितं म्रियमाणजीवस्थितं भगवंतं मानुप्राक्षीः॥२४॥ एवंप्रलोभितोनचिकेताःशता

उप। पुत्रपौत्रान्वृणीष्वबहून्पशून्हस्तिहिरण्यमश्वान्। भूमेर्महदायतनंवृणीष्वस्वयंचजीवशरदोयावदिच्छसि ॥ २२ ॥ एतत्तुल्यंयदिमन्यसेवरं वृणीष्ववित्तंचिरजीविकांच । महाभूमौनचिकेतस्त्वमेधिकामानांत्वाकामभाजंकरोमि ॥ २३ ॥ येयेकामादुर्लभामर्त्यलोकेसर्वान्कामांश्छंदतःप्रार्थयस्व। इमारामास्सरथास्सतूर्यानहीदृ(शी)शालंभनीयामनुष्यैः। आभिर्मत्प्रत्ताभिःपरिचारयस्व

युषइत्यादेरुत्तरमाह ॥ **श्वोऽभावाइति** ॥ हेअंतक मर्त्यस्यमरणशीलस्यपुरुषस्य यदेतत् यएतेपुत्रपौत्रपश्वादयस्ते श्वोऽभावाः श्वोपिनविद्यतेभावःसत्तायेषांतेश्वोऽभावाः क्षिप्रविनाशाइतियावत् । नकेवलमेतावत् । किंतुस्वसद्भावदशायांचसर्वेंद्रियाणांतेजःसामर्थ्यं स्ववृद्धिक्षयचिंतयाजरयंतिच । तस्मान्नतेमयाप्रार्थ्याः । स्वयंचजीवशरदोयावदिच्छसीत्यस्योत्तरमाह ॥ **अपिसर्वमिति** ॥ सर्वमपिजीवितंब्रह्मकल्पपर्यंतंजीवनमप्यल्पमेव । तस्यापिपर्यवसानात् । निरवधिकजीवनस्यमोक्षादन्यत्राभावात् । तस्मात्तदपिनप्रार्थये । इमारामाःसरथाःसतूर्याइत्यादेरुत्तरमाह ॥ **तवैवेति** ॥ वाहारथास्तवैवतिष्ठंतु ॥ २५ ॥ वृणीष्ववित्तमित्यस्योत्तरमाह ॥ **नवित्तेनेति** ॥ महावित्तलाभेपिमनुष्यस्यतृप्त्यदर्शनादित्यर्थः । किंचत्वद्विधेभ्योवित्तादिप्रार्थनंचनकार्यं । तस्यनांतरीयकतयासिद्धत्वादित्याह ॥ **लप्स्यामहइति** ॥ चेत्यदि त्वामद्राक्ष्म तर्हिवित्तंलप्स्यामहेप्राप्स्यामहएव । त्वद्दर्शनमात्रेणवित्तलाभोभविष्यतीतिनपृथक्प्रार्थनीयमितिभावः । जीवनमपिनपृथक्प्रार्थनीयं । तस्यत्वदधीनत्वादित्याह ॥ **जीविष्यामइति** ॥ त्वंयावदीशिष्यसिरक्षयिष्यसितावज्जीविष्यामोतोनायंवरोवरणीयः । किंतुमेमयावरणीयस्तुवरःसएव यःप्राक्प्रार्थितइत्यर्थः ॥ २६ ॥ कुतएवंनिर्बंधइतिचेत् यतस्त्वादृशगुरुप्राप्तावपिभगवत्स्वरूपमविज्ञायपुत्रपौत्रादिकंवृण्वतोमेतमएवभ

---

उप । नचिकेतोमरणंमानुप्राक्षीः ॥ २४ ॥ श्वोभावामर्त्यस्ययदंतकैतत्सर्वेंद्रियाणांजरयंतितेजः । अपिसर्वंजीवितमल्पमेवतवैववाहास्तवनृत्तगीते ॥ २५ ॥ नवित्तेनतर्पणीयोमनुष्योलप्स्यामहेवित्तमद्राक्ष्मचेत्त्वां । जीविष्यामोयावदीशिष्यसित्वंवरस्तुमेवरणीयस्सएव ॥ २६ ॥

विष्यति । तथाहिश्रुतिः । इहचेदवेदीदथसत्यमस्तीत्यादिका । तस्मादेवंजानतामयानतत्प्रार्थ्यतइतिभावेनाह ॥ अजीर्यता मिति ॥ प्रजानन्मर्त्यः अजीर्यतांजराशून्यानां अमृतानांमरणशून्यानां त्वद्विधानांदेवानामुपसमीपमेत्य भगवदुपदेशमप्राप्यैवजीर्यन्विनश्यमानः क्व नक्कापीत्यर्थः । जीवस्यस्वरूपतोनाशाभावात् । देहवियोगस्यभगवज्ज्ञानिनोपिसत्त्वात्जीर्यन्नित्युक्तंविवृणोति ॥ काधस्तइति ॥ अंधंतमआद्यधोगतिस्थःक्व नक्कापीत्यर्थः । प्रजानन्नितियमस्यसंबोधनंवा । दुःखहेतुत्वाच्चन दीर्घजीवनंवरणीयमित्याह ॥ अभिध्यायन्निति ॥ वर्णत्यतःपूर्वंस्त्रीपुत्रादीनामितिशेषः । वर्णःस्त्रीपुत्रादिरूपविशेषः रतिः क्रीडा प्रमोदस्तदुत्थःसुखविशेषः वर्णरतिप्रमोदान्निवृत्तानितिशेषः । अतिदीर्घकालजीवनेहिस्वजीवनमध्यएवान्येषांविनाशः स्यात् । तेषामतिदीर्घकालजीवननियमाभावात् । ततश्चतन्नाशेतेषांस्मरणेनतुदुःखंस्यात् । अतोनदीर्घजीवनंपुरुषार्थः । प्रत्युतअनर्थहेतुरितिभावः ॥ २७ ॥ पूर्वोक्तमेवनिर्धारयति ॥ यस्मिन्निति ॥ हेमृत्यो महतिसांपरायेमुक्तौ नियामकतयेदंब्रह्मास्ति नवेतियस्मिन्विचिकित्संति तत्मुक्तनियामकभगवत्स्वरूपमेव नोब्रूहीतियोजना । श्रुतिःस्वयमाह ॥ यइति ॥ योयंवरोगूढं गूढत्वमनुप्रविष्टःप्राप्तस्तमेवनचिकेतावृणीतेनतस्मादन्यमित्यर्थः ॥ २८ ॥ इतिप्रथमाध्यायस्यप्रथमावल्ली ॥ १ ॥ एवंनचिकेतसोविषयाभिलाषराहित्यादयंब्रह्मविद्यायोग्यइतिभावेनविषयकामनायुक्तस्यतद्रहितस्यचस्वरूपंनिरूपयति ॥ अन्यदि

उप । अजीर्यताममृतानामुपेत्यजीर्यन्मर्त्यःक्वाधस्तःप्रजानन् । अभिध्यायन्वर्णरतिप्रमोदानतिदीर्घेजीवितेकोरमेत ॥२७॥ यस्मिन्निदंविचिकित्संतिमृत्योसांपरायेमहतिब्रूहिनस्तत् । योयंवरोगूढमनुप्रविष्टोनान्यंतस्मान्नचिकेतावृणीते ॥ २८ ॥ इतिप्रथमाध्यायस्यप्रथमावल्ली ॥ १ ॥ १ ॥

भाष्यं । शृंकांशृंखलां ।

त्यादिना ॥ अत्रनैतांशृंकांवित्तमयीमवाप्तइत्यत्राप्रतीतेःशृंकाशब्दार्थमाह ॥ **शृंकामिति** ॥ यद्यपिशृंकांचेमामनेकरूपांगृहा णेत्यत्रशृंकाशब्दःकंठमालापरतयाव्याख्यातः । तथाप्यनुवादसंतुष्टयमदत्तकंठमालायानचिकेतसाप्राप्तत्वात् तृतीयवरत्वेनकंठमालायायमेनादत्तत्वान्नचिकेतसामास्त्वित्यनुक्तत्वाच्च नैतांशृंकांवित्तमयीमवाप्तइत्युक्त्ययोगात् यस्यांमज्जंतीत्युक्तसर्वमनुष्यबंधकत्वायोगाच्चात्रशृंखलापरत्वेनव्याख्यातइत्यवधेयं । अनन्यप्रोक्तेगतिरत्रनास्तीत्यस्यानन्येनैवापृथग्दर्शिनाचार्येणप्रतिपाद्यब्रह्मभूतेन प्रोक्तेअत्रात्मनि गतिरनेकधास्तिनास्तीत्यादिलक्षणाचिंतानास्तीतिव्याख्यानमसत् । वक्ष्यमाणरीत्याब्रह्मात्मैकत्वस्यबाधितत्वेन वस्तुतआचार्यस्यप्रतिपाद्यब्रह्मभूतत्वायोगात् ज्ञानमात्रव्युत्पन्नेनगतिशब्देनतद्विशेषसंशयापरपर्यायचिंतारूपार्थग्रहणायोगाच्चेतिभावेनाह ॥ **अन्यइति** ॥ वस्तुगत्यानन्यत्वंबाधितमित्येवंव्याख्यातं । तद्विपरीतंचजानन्नित्यपिग्राह्यं । ज्ञानंसम्यग्ज्ञानं । ननुज्ञानवाचकगतिशब्दस्यतद्विशेषपरत्वंभवतामप्यावश्यकं । अतःसंशयपरत्वमेवकिंनस्यादितिचेन्न । प्रमासंशययोःप्रमायाअतिशयितत्वेनतद्ग्रहणस्यैवोचितत्वात् वक्ष्यमाणदोषाच्चेति । कुतएवंव्याख्येयं परोक्तएवार्थःकिंनस्यादित्यत आह ॥ **प्रोक्तेति** ॥ वाक्यशेषे अन्येनैव जीवेश्वरभेदज्ञानिनाचार्येण प्रोक्तावेदप्रवचनोत्पादितैवमतिः सुज्ञानायसाक्षात्कारायभवतीत्युक्तत्वेन अनन्यप्रोक्तइतिवाक्यमपि जीवेश्वरभेदाज्ञानिना तदभेदज्ञानिनाचप्रोक्तेज्ञानंनास्तीत्येवव्याख्येयं । नत्वपृथग्दर्शिनाप्रोक्तेआत्मनिउक्तप्रकारसंशयोनास्तीति । वाक्यशेषविरोधादितिभावः । ननुवाक्यशेषस्थस्यान्येनेत्यस्यागमाभिज्ञेनेत्य

भाष्यं । अन्योभगवानन्योहमित्यजानन्ननन्यः । तेनप्रोक्तेगतिर्ज्ञानंनास्ति । प्रोक्तान्येनैवसुज्ञानायप्रेष्ठेतिवाक्यशेषात् ।

र्थकत्वान्नविरोधइतिचेन्न । तथासत्यनन्यप्रोक्तइत्यस्यागमानभिज्ञप्रोक्तइतिव्याख्येयत्वेनापृथग्दर्शिप्रोक्तइतिव्याख्यानायोगात् । अपदार्थत्वादनन्यशब्दःआगमानभिज्ञपरतयानव्याख्यायतइतिचेत्तर्हिअन्येनेत्यस्यापिपृथक्दर्शिनेत्येवव्याख्येयतयाआगमाभिज्ञेनेतिव्याख्यानायोगात् । एतेनानन्यप्रोक्तेगतिरत्रनास्तीत्यत्रागतिरितिपदच्छेदमभ्युपेत्यानन्येनप्रोच्यमानब्रह्मभूतेनाचार्येणप्रोक्तेसतिआत्मनि अगतिरनवगतिरनवबोधोनास्ति । भवत्येवावगतिस्तद्विषयाश्रोतु स्तदनन्योहमित्याचार्यस्यैवेत्यर्थइतियत्परकीयंव्याख्यानांतरं तदपिपरास्तं । आचार्यस्यवस्तुतःप्रोच्यमानब्रह्मभूतत्वस्यबाधितत्वात् । अपृथग्दर्शिनेत्यर्थांगीकारेपिऐक्यज्ञानिनाप्रोक्तेश्रोतुरैक्यज्ञानसंभवेपितस्यज्ञानस्यभ्रांतित्वेनसम्यग्ज्ञानत्वाभावात् । ऐक्यज्ञानस्यभ्रांतित्वंकुतइतिचेत् । वाक्यशेषेजीवेश्वरभेदज्ञानिनाचार्येणवेदप्रवचनोत्पादितामतिःसुज्ञानायभवतीत्युक्त्याभेदज्ञानस्यैवसम्यग्ज्ञानत्वावगमादितिभावः । यच्चोक्तमनन्येस्वात्मभूतेआत्मनिप्रोक्तेसतिगतिरवगतिरन्यासंपाद्यानास्ति । ऐक्यादन्यस्यज्ञेयस्याभावात् । ज्ञानस्यैषानिष्ठायदात्मैकत्वविज्ञानमिति । तदप्यसत् । अनन्यप्रोक्तइत्यस्यसमस्तत्वेन अनन्येआत्मनीतिव्याख्यानायोगात् । बुद्ध्याविवेकेनअनन्यइत्यस्यात्रेत्यनेनान्वयंकृत्वाव्याख्यायतइतिचेत् न । यथाश्रुतानुपपत्तौतथाव्याख्येयत्वात्। प्रोक्तइत्यत्रकर्त्रनुक्तिप्रसंगात्। अन्यावगतिरित्यन्यशब्दाध्याहारप्रसंगात् । वाक्यशेषपर्यालोचनयाभेदज्ञानस्यैवावश्यसंपाद्यत्वावगमेनतद्विरोधाच्चेति । प्रमाणविरोधाच्चनपरव्याख्यानंयुक्तं । किंतुस्वकृतमेवेतिभावेनश्रुत्यर्थनिश्चायकंप्रमाणमाह ॥ जीवानामिति ॥ अभिदांचवेत्तीति

भाष्यं । जीवानांचैवविष्णोश्चयोनवेत्तिभिदांपुमान् । तदनुव्रताश्चयेकेचित्तेपांज्ञानंनजायतइतिब्रह्मवैवर्ते ।

ग्राह्यं । ज्ञानंसम्यग्ज्ञानं । नजायतएवेतिसंबंधः । जानाम्यहंशेवधिरित्यादिकंपरेणैवंव्याख्यातं । पुनरपितुष्टोयमआह । जानामीति । अहंशेवधिः कर्मफललक्षणोनिधिरनित्यइतिजानामि । हियस्मादध्रुवैरनित्यैर्द्रव्यैः यत्ध्रुवंनित्यंपारमाख्यंशेवधिस्तन्नहि प्राप्यते । यस्त्वनित्यसुखात्मकःशेवधिःसएवअनित्यैर्द्रव्यैःप्राप्यतेहियतस्ततोमयाअनित्यसाधनैर्नित्यंनप्राप्यतइतिजानतापिअनित्यद्रव्यैःपश्वादिभिर्नाचिकेतोग्निःस्वर्गसुखसाधनीभूतोग्निश्चितः तेनाहमधिकारापन्नोनित्यमापेक्षिकनित्यंयाम्यस्थानंस्वर्गाख्यंप्राप्तवानस्मीति । तत्रतावदादिवाक्यव्याख्यानमसत् । नह्यध्रुवैरित्युत्तरवाक्यैर्नित्यब्रह्मप्राप्तेरनित्यद्रव्यासाध्यत्वकथनस्यासंगतत्वात् । तुष्टेनयमेनतत्पृष्टब्रह्मस्वरूपस्यैववक्तव्यतयाकर्मफलानित्यत्वकथनस्यासंगतत्वात् । तस्मादिदंब्रह्मपरमेव । तर्हितस्यनित्यत्वेनकथमनित्यत्वमुपपन्नंस्यात् । ज्ञापकाभावेनेदंब्रह्मपरमेवेतिवाकथंनिर्धारणमित्यतस्तद्व्याचष्टे ॥ आख्यमिति ॥ अः इतिब्रह्मेत्यादिश्रुतेरितिभावः । नित्यंवस्त्वितिशेषः । शेवधिःसुखनिधिः । नन्वेवंतर्हिततोमयानाचिकेतश्चितोग्निरनित्यद्रव्यैरित्युत्तरवाक्यमनुपपन्नं । तर्ह्यनित्यद्रव्यैःपश्वादिभिरनुष्ठितस्याग्निचयनस्यनित्यभगवत्प्राप्तिहेतुत्वमस्तीत्यतोऽनित्यद्रव्यैरित्येतद्यथावद्व्याचष्टे ॥ नित्यमिति ॥ अनित्यद्रव्यैरित्यत्रनित्यपदस्यव्यत्यासः । ततश्चनित्याद्रव्यैरितिलभ्यते । अस्यद्रव्याणि अद्रव्याणीतिषष्ठीसमासः । षष्ठ्यर्थश्चविषयविषयिभावइतिभावेनोक्तंआख्यविष्णुविषयैरिति । नित्यंविष्णुविषयैरितिसंबंधः । ततश्चनित्यत्वंषष्ठ्यर्थविषयीकरणरूपक्रियाविशेषणमित्युक्तंभवति । अन्येषांद्रव्याणांसविषयकत्वाभावान्मनआदिभिरित्युक्तं ।

भाष्यं । आख्यंविष्णवाख्यंनित्यंशेवधिरितिजानामि । नित्यमाख्यविष्णुविषयैर्द्रव्यैर्मनआदिभिः ।

एवमनित्यद्रव्यैरित्यत्रनित्यपदस्यव्यत्यासेनक्रियाविशेषणत्वमभ्युपेत्यव्याख्यातं । इदानींतदनाश्रयेण अश्वासौनित्यश्चानित्यः तस्यद्रव्याणीतिविग्रहमभिप्रेत्यव्याचष्टे ॥ आख्येति ॥ तदेवविशदयति ॥ विष्णवाख्येति ॥ ततश्चकेवलाग्निचयनमात्रस्य भगवत्प्राप्तिहेतुत्वाभावेपिसर्वदानिर्दोषगुणपूर्णजीवभिन्ननित्यभगवद्विषयमनआदिपूर्वमनुष्ठितस्यतत्प्राप्तिहेतुत्वोपपत्तिरितिभावः । नन्वनित्यद्रव्यैरितिप्रसिद्धार्थकमेवकिंनस्यात् । नचप्राप्तवानस्मिनित्यमित्येतदनुरोधेनतथाव्याख्यायतइतिवाच्यं । नित्यमापेक्षिकनित्यंयाम्यंस्थानंस्वर्गाख्यंप्राप्तवानस्मीत्यर्थोपपत्तेरित्यतस्तद्व्याचष्टे ॥ नित्यमिति ॥ नित्यशब्दस्यमुख्यार्थग्रहणोपपत्तावमुख्यार्थग्रहणायोगात् । याम्यस्थानस्यापिज्ञानमात्रसाध्यत्वेनविनाशिद्रव्यानुष्ठिताग्निचयनमात्रसाध्यत्वाभावाच्चस्वर्ग्यमग्निमित्यादावग्निचयनस्यस्वर्गसाधनत्वेनोक्तत्वात् । यमस्थानप्राप्तिहेतुत्वासंभवाच्च । नचयमस्थानंस्वर्गइत्युच्यते । प्रमाणाभावादितिभावः । किंच नह्यध्रुवैःप्राप्यतेहिध्रुवंतदितिपूर्ववाक्येध्रुवशब्दान्नित्यत्वेनभगवानेवप्रस्तुतः । त्वयापिध्रुवशब्दस्यब्रह्मपरत्वांगीकारात् । एवंचात्रापिनित्यशब्दोब्रह्मपरएवास्त्वितिभावेनाध्रुवैरित्यस्यपरोक्तार्थनिरासायतद्व्याचष्टे ॥ ध्रुवइति ॥ तद्भक्तिवर्जितैस्तद्भक्तिदार्ढ्यशून्यैरित्यर्थः । अन्यथाऽनित्यैरेवज्ञानादिभिरस्मदादिभिर्वाध्रुवस्यप्राप्यत्वादनुपपत्तिः । यद्वा अनित्यद्रव्यैरित्यस्यनित्यमाख्यविष्णुविषयद्रव्यैर्मनआदिभिरित्यादिव्याख्यानमयुक्तं । तथात्वेततोमयानचिकेतश्चितोग्निरनित्यद्रव्यैरित्यत्रततइत्यनेन नह्यध्रुवैरितिपूर्वोक्तार्थस्यहेतुत्वेनपरामर्शायोगादित्यतोनह्यध्रुवैरितिवाक्यंव्याचष्टे ॥ ध्रुवइति ॥ ततश्चध्रु 

भाष्यं । आख्यनित्यविषयैःविष्णवाख्यनित्यविषयैर्द्रव्यैः । नित्यंभगवंतंप्राप्तवानस्मि । ध्रुवोभगवान्अध्रुवैस्तद्भक्तिवर्जितैर्नप्राप्यते ।

वोभगवानध्रुवैस्तद्भक्तिवर्जितैर्माहात्म्यज्ञानपूर्वकस्नेहवर्जितैर्नप्राप्यते हि यस्मात्तस्मात्ततोनित्यभगवद्विषयमनआदिभिरेवमया ग्निश्चितइतिहेतुहेतुमद्भावोपिसंगच्छतइतिभावः । प्रत्युतत्वत्पक्षएवहेतुहेतुमद्भावानुपपत्तिः । नह्यनित्यैर्नित्यंनप्राप्यतेयस्मात्त तोमयाअनित्यद्रव्यैःपश्वादिभिरग्निश्चितइतिहेतुहेतुमद्भावःसंभवति । विरोधात् । नचयतोऽनित्यसाधनैर्नित्यंनप्राप्यते यश्चानि त्यसुखात्मकःशेवधिःसएवानित्यद्रव्यैःप्राप्यते ततोमयानाचिकेतश्चितोग्निरितिहेतुहेतुमद्भावोपपत्तिरितिवाच्यं । अश्रुतकल्पना प्रसंगादितिभावः । क्रतोरानंत्यमितिकथं । क्रतुस्वरूपस्याशुतरविनाशित्वात् । नचानंत्यंअनंतफलत्वमितिवाच्यं । तथापित स्यभगवद्विशेषणत्वासंभवादित्यतस्तद्व्याचष्टे ॥ क्रतोरिति ॥ क्रतोर्ज्ञानस्य । एवंचानंतलोकाप्तिमित्युक्तानुवादरूपत्वमेतस्य संभवतीतिभावः । स्तोममहदित्यस्यस्तोमंअणिमाद्यैश्वर्याद्यनेकगुणसहितंच महत् निरतिशयंचेतिस्तोममहदितिव्याख्यानम सत् । एतस्यप्रागनुक्तत्वेनानुवादासंभवादितिभावेनतत्तात्पर्यंतावदाह ॥ स्तोमैरिति ॥ वेदसमूहैरित्यर्थः । प्राप्तुंज्ञातुं । किमु प्रत्यक्षादिभिरित्यपिशब्दः । तर्हिसर्वेवेदायत्पदमामनंतीतिवक्ष्यमाणविरोधइत्यतउक्तं ॥ सर्वात्मनेति ॥ एवंचब्रह्मजज्ञेत्यु क्तानुवादरूपमेतदितिभावः । ननुस्तोममहदित्यस्मात्पदात्कथमेषोर्थोलब्धइत्यतःतत्पदार्थमाह ॥ स्तोमेभ्योपीति ॥ उरुगा यमित्यस्यपुल्लिंगत्वेनश्रुतौमहदितिलिंगव्यत्यासइतिभावेनमहांतमित्युक्तं । वेदसमूहापेक्षयामहत्त्वंनामसाकल्येनतदप्रतिपाद्यत्व मेव । स्वरूपमहत्त्वस्याल्पत्वादितिभावः । तृतीयप्रश्नस्यजीवविषयकत्वंवदंतंप्रतिएतद्वाक्यगतमपिबाधकमाह ॥ उरुगायमि

भाष्यं । क्रतोरानंत्यहेतुं । स्तोमैरपिसर्वात्मनाप्राप्तुमशक्यं । स्तोमेभ्योपिमहांतं । उरुगायमित्युक्तत्वाच्चनजीवविषयोयंप्रश्नः ।

ति ॥ उरुगायशब्दस्यभगवत्परत्वंसाधितमेवेतिभावः । ननुनजीवविषयोयंप्रश्नइत्यनुपपन्नं । जीवपरत्वेबाधकाभावात् । नच ब्रह्मपरश्रुतिलिंगाद्यनुपपत्तिः । तस्यब्रह्माभिन्नत्वेनस्वरूपापेक्षयाजीवेपिसंभवादितिचेन्न । स्यादेवंयदिजीवेश्वराभेदएवस्यात् नचसोस्ति । अप्रामाणिकत्वात् । प्रमाणविरुद्धत्वाच्चेत्याह ॥ **शरइति** ॥ आत्माजीवःशरस्थानीयः ब्रह्मलक्ष्यस्थानीयं । तन्म यस्तत्रसंलग्नचेताः । नहिशरलक्ष्ययोरभेदोस्तीतिभावः । अभयमित्यादेरर्थोवक्ष्यते । आदिपदेनानन्यप्रोक्तेगतिरत्रनास्ति । अ न्यत्रधर्मात् नित्योनित्यानामित्यादिवाक्यग्रहणं । जीवब्रह्माभेदनिरासायाभयंतितीर्षतांपारमितिवाक्योदाहरणेनस्मारितंद्वि तीयप्रश्नस्यभगवद्विषयत्वेयुक्त्यंतरमाह ॥ **नाचिकेतमिति** ॥ यस्सेतुरीजानानामक्षरंब्रह्मतत्परं । अभयंतितीर्षतांपारंनाचिके तंशकेमसीतिनाचिकेताग्नेरक्षरत्वपरब्रह्मत्वाभयत्वादिकथनात्नाचिकेताग्निस्थोभगवानेवात्रस्वर्ग्यमग्निमित्यादावुच्यतइतिसिद्धं । प्रसिद्धाग्नौतेषामसंभवात् विष्णौतुसंभवादितिभावः । अपव्याख्यानंतूत्तरत्रनिराकरिष्यामः । कामस्याप्तिमित्यत्रजगतःप्रतिष्ठा मित्यादिवत्कामस्याप्तिमित्येतदपिउरुगायविशेषणमितिव्याख्यानमसत् । पूर्वंतस्यानुक्तत्वेनानुवादायोगात् । अत्यस्राक्षीरित्यस्य कर्मानुक्तिप्रसंगाच्च । संसारभोगजातमितिअध्याहारस्त्वगतिकागतिरितिभावेनतद्वाक्यंयोजयति ॥ **उरुगायमिति** ॥ काम

भाष्यं । शरोह्यात्माब्रह्मतल्लक्ष्यमुच्यते । शरवत्तन्मयोभवेत् । अभयंतितीर्षतांपारं । तादृगेवभवतीत्यादौसर्वत्रभेदस्यैवोक्तेश्चनजीवाभेदः । नाचिकेतंशकेमसीत्युक्तत्वाच्चनाचिकेताग्निस्थोभगवानेवोच्यतइतिसिद्धं । उरुगायंदृष्ट्वाकामस्याप्तिमत्यस्राक्षीः ।

स्यकाम्यस्य तृतीयप्रश्नस्यमृतविषयत्वेयेयंप्रेतेविचिकित्सेतिवाक्यार्थएवनयुज्यतइतिबाधकांतरमाह ॥ नचेति ॥ मरणानंतरमपिजीवसद्भावस्यस्वस्मिन्नेवप्रत्यक्षेणनिश्चितत्वात् निश्चितेसंशयायोगादितिभावः । नचनचिकेतसोमरणमेवकुतःसिद्धं । सशरीरस्यैवमृत्युंप्रतिगमनोपपत्तेरितिवाच्यं । तथासतितस्यशापरूपत्वायोगात् । पितरमेवजीवन्यानीतिशाखांतरेजीवन्नित्युक्त्ययोगाच्च । नहिपूर्वममृतत्वेजीवन्नित्येतत्स्वरसं । नचनचिकेतसःसंशयाभावेप्यन्येषांसंशयःस्यादेव । वादिविप्रतिपत्तेः । नह्यत्रनचिकेतसइतिविशिष्योच्यतइतिवाच्यं । अत्रचास्माकंनप्रत्यक्षेणनाप्यनुमानेननिर्णयोयुज्यतइतित्वयैवोक्तत्वेननचिकेतसएवसंशयाभ्युपगमात् । स्वस्यसंशयाभावेएतद्विद्यामनुशिष्टस्त्वयाहमितिप्रार्थनायोगाच्च । नचप्रेक्षावद्भिर्महतांवरोल्पप्रयोजनायव्यीक्रियतइतिभावः । गह्वरेष्ठं गह्वरेविषमेअनेकानर्थसंकटेतिष्ठतीतिगह्वरेष्ठमितिव्याख्यानमसदितिभावेनतद्व्याचष्टे ॥ गह्वरइति ॥ मुक्तजीवस्यशास्त्रंविनासंसार्यगम्यत्वाद्गह्वरत्वं । तस्यजीवपरत्वेदुर्दर्शत्वमनुपपन्नं । तस्ययत्तदद्रेश्यमदृश्यत्वादिगुणकोधर्मोक्तेरितिब्रह्मण्येवश्रवणात् । गुहानिहितत्वंचभगवतएवेत्युक्तं । नचजीवज्ञानाद्धर्षशोकत्यागरूपोमोक्षःसंभवतीतिभावः । प्रवृह्य शरीरादेःपृथक्कृत्येतिव्याख्याननिरासायतत्पदमनूद्यव्याचष्टे ॥ प्रवृह्येति ॥ पृथक्कृत्यपृथक्ज्ञात्वेत्यर्थः । शरीरादेःपृथक्करणंचकिंजीवस्यभगवतोवा । नाद्यः । एनमाप्यसमोदतइतिमुक्तप्राप्यत्वव्यपदेशायोगात् । नद्वितीयः । भगवतःसंसारिशरीराद्यभेदस्यकेनापिवादिनानंगीकृतत्वेनतन्निषेधायोगादितिभावः । ननुनात्रमुक्तज्ञापकमस्ति । येनायंमुक्तप्राप्यत्वव्यपदेशः

---

भाष्यं ॥ नचमृत्वायमंप्राप्तस्यनचिकेतसोमृतोस्तिनवेतिसंशयोयुज्यते । गह्वरेमुक्तजीवेस्थितं । प्रवृह्य जीवात्पृथक्कृत्य ।

स्यादित्यतोगह्वरेष्ठंप्रवृह्येतिपदद्वयस्योक्तार्थत्वे एनमाप्यसमोदते मोदनीयंलब्ध्वेत्यस्यमुक्तपरत्वेचप्रमाणमाह ॥ मुक्तेति ॥ किंचनेदंप्रकरणंजीवपरं । तथासतिसर्वेवेदायत्पदमामनंतीतिसर्ववेदप्रतिपाद्यत्वोक्त्ययोगात् । तस्यतत्तुसमन्वयादिति सूत्रकृताब्रह्मण्येवोक्तत्वात् । नचजीवेसमन्वयोभिधीयते । नचात्रजीवेशाभेदोविवक्षितइतिसर्वस्याप्युपपत्तिरितिवाच्यं । अन्यत्रधर्मादन्यत्राधर्मादितिधर्माधर्मकार्यकारणभूतभविष्यद्वर्त्तमानप्रपंचभिन्नत्वस्यैवोक्तत्वात् । नचात्रजीवाद्भेदोनोक्तइतिवाच्यं । धर्माधर्मपदाभ्यामेवपुण्यपापात्मनांजीवानांग्रहणात् । किंचओमित्येतदिततिस्योंनामकत्वमुच्यते तच्चब्रह्मणएवनजीवस्य । ओमितिब्रह्मेतिश्रुतेः । ॐतत्सदितिनिर्देशोब्रह्मणस्त्रिविधःस्मृतइत्यादिस्मृतेश्च । किंच एतद्ध्येवाक्षरंब्रह्मएतद्ध्येवाक्षरंपरमितिपरब्रह्मत्वादिव्यपदेशाद्विष्णुरेवनजीवः । ननुओमित्येतदितिपूर्वमात्मतत्वस्योंशब्दवाच्यत्वंतत्प्रतीकत्वंचोक्तं । अत्रतु एतदेवाक्षरंओमित्यक्षरं ब्रह्म अपरं एतदेवाक्षरं परंचब्रह्मेतितस्यैवोंकारस्यपरापरब्रह्मत्वमुच्यतइतिकथमिदंसाधकमितिचेन्न । ॐकारस्यशब्दात्मकस्यजडत्वेनपरापरब्रह्मत्वाभावात् । एतदालंबनमित्युक्तसर्वाश्रयत्वासंभवाच्च । नचाविद्यमानमप्युपासनार्थमुच्यतइतिवाच्यं । तत्त्वमसीत्यादावप्यविद्यमानमेवैक्यंउपासनार्थमुच्यतइत्यापातात् । अविद्यमानोपासनस्यानर्थफलत्वाच्च । प्रमाणविरोधाच्चनैवंव्याख्यानंयुक्तमितिभावेनमंत्रद्वयार्थनिश्चायकंप्रमाणमुदाहरति ॥ एतद्ध्येवेति ॥ परमित्यत्रापिएतद्ध्येवाक्षरमितिसंबध्यते । एवंचएतद्ध्येवाक्षरंब्रह्मएतद्ध्येवाक्षरंपरमितिअनुवादेनविष्णवाख्यमितिव्याख्यानं । अक्षरशब्दार्थोऽव्ययमिति ।

भाष्यं ॥ मुक्तजीवेस्थितंविष्णुंविदित्वाजीवतःपृथक् । मोदतेमोदनीयंतंप्राप्यमुक्तस्सदैवचेतिमहावाराहे । एतद्ध्येवाक्षरंब्रह्मविष्णवाख्यंपरमव्ययं ।

ननुयदुक्तमिदंप्रकरणंविष्णुपरमेवेति तन्न । नजायतइतिमंत्रेजीवस्यजननमरणाभावोक्तेस्तस्यजीवविषयकत्वावगमात् । तथाहि विपश्चित्अविपरिलुप्तज्ञानस्वभावोनजायतेनम्रियतेच । नायमात्माकुतश्चित्कारणाद्बभूव स्वस्माच्चनबभूवकश्चित्पदार्थः । अतोयमात्माअजोनित्यश्चशाश्वतः अपक्षयवर्जितः अतएवपुराणः पुरातनएवेति । नचैतत्प्रकरणस्यविष्णुपरत्वेमंत्रःसंगच्छते । असंगतत्वादितिचेत् । मैवं । विपश्चिच्छब्दस्यज्ञानिमात्रेनिरूढस्याविपरिलुप्तज्ञानस्वभावइतिज्ञान्यज्ञानिसाधारण्यकरणायोगात् । कुतश्चिन्नजायतइत्येतावतापूर्तेर्नायमित्यस्यवैयर्थ्यात् । कारणांतराभावेपिस्वस्मादेवोत्पत्तिर्भवत्वित्याशंकायाएवानुदयेननबभूवकश्चिदित्यस्यावक्तव्यत्वाच्च । कारणमात्रस्यापिकुतश्चिदित्यनेननिषेधसंभवात् । नचास्माकमसंगतिदोषः । एतदालंबनंज्ञात्वेतिप्रकृतज्ञानिनोजननमरणाभावलक्षणफलप्रतिपादकत्वेनसंगतत्वादितिभावेनमंत्रार्थनिश्चायकंप्रमाणमेवोदाहरति ॥ देहेति ॥ नकेवलंभगवतःकिंतुज्ञानिनोपीत्यर्थोपिशब्दः । उद्भवाभवौउत्पत्तिविनाशौनेत्यस्यपूर्वोत्तराभ्यांसंबंधः । मुक्तिदशायामेतत् । अनेनमंत्रतात्पर्यमुक्तंभवति । ननुदेहोत्पत्तिविनाशाख्यौउत्पत्तिविनाशौयदिभगवतइवज्ञानिनोपिनस्तस्तर्हिभगवद्विपश्चितोरविशेषःस्यादितिचेन्न । विपश्चितउत्पत्तिविनाशाभावयोर्भगवज्ज्ञानसाध्यत्वादित्यभिप्रेत्य नजायतेम्रियतेवाविपश्चिदित्यत्रनायंकुतश्चिदितिहेतुप्रतिपादकमितिभावेनतद्व्याचष्टे ॥ कुतश्चिदिति ॥ म्रियतेचेतिग्राह्यं । भावाभावौ देहोत्पत्तिविनाशौ । यादृशोभावितस्त्वीशस्तादृशोजीवआभवेदित्यादेरित्यर्थः । ननुभगवद्विपश्चितोरुभयोरपिदेहोत्पत्तिविनाशाभावमंगीकृत्यविप

भाष्यं ॥ सर्वस्यालंबनंज्ञात्वामुच्यतेनात्रसंशयइतिच । देहोत्पत्तिविनाशाख्यौज्ञानिनोप्युद्भवाभवौ । नकुतश्चिद्यतोविष्णुर्जायतेतस्तदीक्षणात् ।

श्चितस्तदभावोभगवज्ज्ञानसाध्यइतितयोर्विशेषःकुतःसमर्थनीयः । ज्ञानिनःस्वरूपतएवोत्पत्तिविनाशाभावोभगवतस्तुदेहतोप्यु त्पत्तिविनाशाख्यौउद्भवाभवौनस्तइतिकुतोनव्याख्यायतइत्यतआह ॥ **यस्मादिति** ॥ तस्मात्देहतोप्युत्पत्तिविनाशाख्यावेवो द्भवाभवौज्ञानिनोनस्तइतिव्याख्येयं । नतुस्वरूपोत्पत्तिविनाशाख्यौ । तदभावस्यसर्वसाधारण्येनज्ञानिनोविशेषाभावप्रसंगादि त्यर्थः । ननुदेहिनोजीवस्यकथंस्वरूपेणजननमरणाभावइत्यतःप्राप्तमजोनित्यःशाश्वतोयंपुराणइतिवाक्यंव्याचष्टे ॥ **अजइति**॥ स्वरूपेणेतिवर्त्तते । पुरंदेहमणन्नपीत्यनेनदेहित्वस्याप्रयोजकत्वमुक्तं । अनेनहन्यमानेपीत्यपिशब्दस्यपुराणशब्देनापिसंबंधइत्यु क्तंभवति । एवंप्रमाणमुदाहृत्यस्ववचनेनापिविवृण्वन् नायंकुतश्चिदित्यत्रप्रकृतविपश्चितएवपरामर्शइतिभ्रमंवारयन्पूर्वत्रार्यंहेतु रितिभावेनतद्व्याचष्टे ॥ **अयंभगवानिति** ॥ कुतोपिकारणात् । उपलक्षणमेतत् । नम्रियतइत्यपिग्राह्यं । म्रियतेचेत्यनेनवा शब्दश्चशब्दार्थइत्युक्तंभवति । अत्रज्ञानिनोजननमरणाभावौदेहोत्पत्तिविनाशाभावाख्यावेवविवक्षितौनतुस्वरूपेणजननमरणा भावावित्यभिप्रेत्यनबभूवकश्चिदितिवाक्यंव्याचष्टे ॥ **यतइति** ॥ स्वतःस्वरूपेणम्रियतेनचेतिग्राह्यं । तर्हिंकागतिर्जीवोत्पत्त्या दिवाक्यानामित्यतआह ॥ **देहसंबंधादिति** ॥ देहवियोगान्म्रियतेचेतिग्राह्यं । हिशब्दःप्रमाणप्रसिद्धिमाह । हेतौवा । यस्मा द्देहसंबंधादेवजायतेतस्मात्कश्चिदपिस्वतोनबभूवेति । अस्त्वेवंसर्वेषांजीवानांस्वरूपेणोत्पत्तिविनाशाभावौ । किंततइत्यतआह ॥

---

भाष्यं ॥ भावाभावौनविदुषोयस्माज्जीवोनकश्चन । जायतेम्रियतेवापिस्वरूपेणकथंचन । अजोनित्योऽविकारश्चजीवःपुरमणन्नपीतिच । अयं भगवान्कुतोपिनबभूवयस्मादतस्तद्वेत्तापिविपश्चिन्नजायतेनम्रियतेच । यतःकश्चिज्जीवःस्वतोनबभूव । देहसंबंधाद्धिजायते ।

विपश्चितस्त्विति ॥ तुशब्दोऽज्ञानिभ्योविशेषद्योतकः । यतःकश्चिदपिजीवःस्वतोनबभूव अतोविपश्चितोमुक्त्यनंतरंकर्मनि
र्मितदेहसंबंधाभावान्नजायते । तद्वियोगाभावान्नम्रियतइत्येववक्तव्यं । नतुस्वरूपोत्पत्तिविनाशाभावेन । तस्यसर्वजीवसाधार
णत्वेनज्ञानफलत्वानुपपत्तेरितिभावः । ननूभौतौनविजानीतइतिहंतृत्वहतत्वज्ञानस्यभ्रांतित्वमुक्त्वातत्रनायंहंतिनहन्यतइत्यर्था
भावोहेतुरुच्यते । तदयुक्तं । देहविनाशरूपहननकर्मत्वस्यतत्कर्तृत्वस्यचसत्त्वादित्यतोहेतुहेतुमद्भावंस्फोरयन्हेतुवाक्यंव्याच
ष्टे ॥ जीवस्यापीति ॥ देहविनाशाख्यमरणवत्त्वेनप्रसिद्धस्यापीत्यपिशब्दः । स्वतःस्वरूपेण । ननुअणोरणीयानितिमंत्रोजी
वपरएव । हंताचेन्मन्यतेहंतुमितिजीवस्यैवप्रकृतत्वात् । अन्यथामध्येजीवनित्यत्वकथनस्यासंगतत्वादित्यतस्तस्योपयोगंदर्शयन्
अस्यजंतोर्निहितोगुहायामितिवाक्यंव्याचष्टे ॥ एवमिति ॥ अस्येत्यस्यैवार्थएवंनित्यस्येति । तथाचपरमात्मनोनित्यभूतजी
वहृद्गतत्वंवक्तुंजीवस्यनित्यत्वमुक्तमितिनासंगतिरितिभावः । नचजीवस्याणोरणीयस्त्वंमहतोमहीयस्त्वंवायुज्यते । तस्याणुत्वा
त् । नचाणुमहद्द्वायल्लोकेस्ति तत्तदात्मकत्वेनतथाव्यवहारः । तर्हिअणुर्महानित्येववक्तव्यत्वापातात् । अणोरणीयान्महतोमही
यानितिअणुमहद्भिन्नत्वस्यैवावगमाच्च । नचाणोःश्यामाकादेरणीयानितिश्यामाकाद्यपेक्षयासूक्ष्मवस्त्वात्मकत्वं महतःपृथिव्यादे
रपिमहानितिपृथिव्याद्यपेक्षयास्थूलवस्त्वात्मकत्वमुच्यतइतिवाच्यं । पंचम्यंताणुमहच्छब्दयोःसामान्यशब्दत्वेनसर्वाणुमहद्विष
यत्वात् । नचबाधकंविनासामान्यशब्दोविशेषपरोंगीकर्तुमुचितः । नचैकस्यात्मनोविरुद्धपरिमाणद्वयासंभवादेवमंगीकारः ।

भाष्यं ॥ विपश्चितस्तुदेहसंबंधाभावान्नजायतेनम्रियतेच । जीवस्यापिस्वतोमरणाभावादुभौतौनविजानीतः । एवंनित्यस्यजंतोर्गुहायांनिहितः ।

अणुमहत्पदार्थात्मकत्वस्यसुतरांविरुद्धत्वात् । यथाचनविरोधस्तथोपपादितमन्यत्राचार्यैः । वक्ष्यतेचविरुद्धधर्मघटकमैश्वर्यंभगवतः । अक्रतुरकामोदृष्टादृष्टविषयोपरतइतिव्याख्यानमसत् । दृष्टादृष्टविषयवैराग्यस्यसाक्षाद्दर्शनहेतुत्वाभावादितिभावेनतद्व्याचष्टे ॥ **एविष्णाविति** ॥ अइत्यस्यसप्तमीएइति । अशब्दोब्रह्मवाची । अःइतिब्रह्मेतिश्रुतेरितिभावः । अनेनअक्रतुः क्रतूपलक्षितकर्मरहितइतियथाश्रुतप्रतीतिरप्यपास्ता । तर्हिविष्णुविषयक्रतुमान्पश्यतीतिकथं । क्रतोःकर्मात्मकत्वेनतस्यसाक्षादपरोक्षज्ञानसाधनत्वाभावादित्यतआह ॥ **तन्निश्चयइति** ॥ श्रवणादिरूपनिश्चयएवक्रतुशब्दार्थइतिभावः । आत्मनःस्वस्यमहिमानंमाहात्म्यमित्यन्यथाप्रतीतिनिरासाय महिमानमात्मनइत्येतद्व्याचष्टे ॥ **आत्मनइति** ॥ षष्ठीभ्रमवारणायसकाशादित्युक्तं । जीवादित्यर्थः । अन्यथावीतशोकोभवतीत्यस्यानुपपत्तिः । प्रमाणविरोधाच्चनान्यथाव्याख्यानंयुक्तमितिभावेनतदर्थनिश्चायकंप्रमाणमाह ॥ **जीवादिति** ॥ श्रुतौ महिमानमात्मनइत्यस्यां । नन्वासीनस्यदूरंव्रजनादिकंविरुद्धं । नहिभगवान्मायावी । येनैंद्रजालिकक्रियावदुपपत्तिःस्यादित्यतआह ॥ **ऐश्वर्यादेवेति** ॥ तत्रप्रमाणमाह ॥ **आसीनइति** ॥ अनेनाणोरणीयान्महतोमहीयानित्येतद्विरुद्धमितिपरास्तं ॥ **प्रथमाध्यायस्यद्वितीयावल्ली** ॥ १ । २ ॥ दीयमानमपिपुत्रादिकंपरित्य

---

भाष्यं ॥ एविष्णौक्रतुर्यस्यसोक्रतुस्तन्निश्चयः । आत्मनस्सकाशान्महिमानंमहामानं । जीवाद्गुणपरीमाणंयस्माद्विष्णोर्महत्तरं । तस्माज्जीवात्समहिमाविष्णुरित्युच्यतेश्रुताविति च । ऐश्वर्यादेवासीनोदूरंव्रजतीत्यादि । आसीनोदूरंव्रजतिशयानोयातिसर्वतः । ऐश्वर्याद्भगवान्विष्णुर्विरुद्धंघटयत्यसाविति च ॥ १ ॥ २ ॥

ज्यब्रह्मविद्यामर्थयमानंनचिकेतसंस्तोतुंतदुभयस्वरूपमाह ॥ **अन्यदिति** ॥ अत्रश्रेयइतिब्रह्मविद्योच्यते । निःश्रेयससाधनत्वात् । प्रेयइतिप्रीतिविषयपुत्रादिकाम्यमुच्यते । उतशब्दश्चशब्दार्थः । इवशब्दोवधारणार्थः । श्रेयोन्यद्विलक्षणमेव प्रेयसइतिशेषः। प्रेयश्चश्रेयसोन्यदेव । जानतांश्रेयःप्रेयसोरेकत्वंसूचयितुंवाइवशब्दः । कथंश्रेयःप्रेयसोःपरस्परवैलक्षण्यमित्यतआह ॥ **तेउभेइति** ॥ तेउभेश्रेयःप्रेयसीनानार्थेमोक्षतदितराख्यविलक्षणप्रयोजनविषये पुरुषंजीवं सिनीतोबध्नीतः । षिञ्बंधनइतिधातोः । किंततइत्यतस्तदुभयमाददानस्यफलमाह ॥ **तयोरिति** ॥ तयोःश्रेयःप्रेयसोर्मध्येयःपुरुषःश्रेयएवादत्तेतस्यसाधुभद्रंमोक्षाख्यंभवतीत्यर्थः । यउयश्चप्रेयएववृणीते सअर्थात्मोक्षाख्यप्रयोजनात्हीयते हीनोभवति ॥ १ ॥ तदेवविशदमाह ॥ **श्रेयश्चेति** ॥ श्रेयश्चप्रेयश्चेत्येतौकर्मवशान्मनुष्यमेतःप्राप्नुतः । तदाधीरःपुरुषस्तौप्राप्तौश्रेयःप्रेयोरूपार्थौ संपरीत्यसम्यक्ज्ञात्वाविविनक्ति इदंपुरुषार्थप्रदमिदंनेतिविवेचयति । एवंविवेकानंतरंधीरःप्रेयसः प्रेयःपरित्यज्यश्रेयएववृणीते । मंदस्तुयोगक्षेमान् अप्राप्तलाभोयोगः प्राप्तपरिपालनंक्षेमः । योगक्षेमात्मकंप्रेयएववृणीते ॥ २ ॥ यत्प्रशंसार्थमेतदुक्तंतमिदानींप्रशंसति ॥ **सइति** ॥ हेनचिकेतः स मयाप्रलोभितोपित्वंप्रियान् तत्रहेतुः प्रियरूपान् मनोहररूपान्कामान्काम्यान्मयादत्तानपिअभिध्यायन् तेषा

---

उप ॥ अन्यच्छ्रेयोन्यदुतैवप्रेयस्तेउभेनानार्थेपुरुषंसिनीतः । तयोःश्रेयआददानस्यसाधुभवतिहीयतेर्थाद्यउप्रेयोवृणीते ॥ १ ॥ श्रेयश्चप्रेयश्चमनुष्यमेतस्तौसंपरीत्यविविनक्तिधीरः । श्रेयोधीरोभिप्रेयसोवृणीतेप्रेयोमंदोयोगक्षेमान्वृणीते ॥ २ ॥ सत्वंप्रियान्प्रियरूपांश्चकामानभिध्यायन्नचिकेतोत्यस्राक्षीः ।

मनित्यत्वादिदोषानितिशेषः । अत्यस्राक्षीरतिसृष्टवानसि । एतांमयादत्तांवित्तमयींसुवर्णमयींशृंकांशृंखलांनैवावाप्तः । यद्यन्येपिनैवाप्ताः तर्हिकोविशेषोस्येत्यतआह ॥ **यस्यामिति** ॥ यस्यांवित्तमय्यांशृंखलायांबहवोमनुष्यामज्जंति तयाशृंखलयात्मानंबध्नंतीत्यर्थः ॥ ३ ॥ श्रेयःप्रेयसोःस्वरूपंनिरूपयन्तेउभेनानार्थेइत्युक्तमेवविवृणोति ॥ **दूरमेतेइति** ॥ याप्रेयोरूपाअविद्याविद्याविरुद्धेतिविज्ञाता । याचश्रेयोरूपाविद्येतिज्ञाताविद्वद्भिः तेएतेश्रेयःप्रेयसी । दूरंविपरीतेअतिविरुद्धे । विरुद्धत्वमेवविवृणोति । विषूचीइति । विरुद्धगतिहेतूइत्यर्थः । तत्राहंनचिकेतसंविद्याभीप्सितमेवमन्ये । कुतः । त्वात्वांबहवःकामानलोलुपंतःनलोलुपंति । नप्रलोभयंतीतियावत् ॥ ४ ॥ श्रेयःकामएवश्रेष्ठइतिभावेनप्रेयःकामान्निंदयति ॥ **अविद्यायामिति** ॥ अविद्यायां पुत्रपौत्रादिलक्षणायां अंतरेमध्येवर्तमानाः स्वयंधीराःस्वात्मानंस्वयमेवधीरान्वदंतः पंडितंआगमाभिज्ञंमन्यमानाःदंद्रम्यमाणाःवक्रगतयोमूढाःपरियंतिप्रवर्तंते । ननुबहूनांएवंप्रवृत्तेःकथमियंमूढप्रवृत्तिःस्यादित्यतस्तत्रदृष्टांतमाह ॥ **अंधेनैवेति** ॥ ५ ॥ नित्यपुमर्थमोक्षसाधनंश्रेयःपरित्यज्यानित्यंकाम्यंपुत्रपौत्रादिकंप्रेयोपरनामकंकिमितिकामयंतइत्यतआह ॥ **नेति** ॥ सांपरायोमोक्षस्तत्साधनीभूतोभगवानितियावत् । वित्तमोहेनमूढं अतएवप्रमाद्यंतंबालंप्रतिनभाति । अयमेवलोकोस्तीत्यभिमानी

उप ॥ नैतांशृंकांवित्तमयीमवाप्तोयस्यांमज्जंतिबहवोमनुष्याः ॥ ३ ॥ दूरमेतेविपरीतेविषूचीअविद्यायाचविद्येतिज्ञाता । विद्याभीप्सितंनचिकेतसंमन्येनत्वाकामाबहवोलोलुपंतः ॥ ४ ॥ अविद्यायामंतरेवर्तमानास्स्वयंधीराःपंडितंमन्यमानाः । दंद्रम्यमाणाःपरियंतिमूढाअंधेनैवनीयमानायथांधाः ॥ ५ ॥ नसांपरायःप्रतिभातिबालंप्रमाद्यंतंवित्तमोहेनमूढं । अयंलोकोनास्तिपरइतिमानीपुनःपुनर्वशमापद्यतेमे ॥ ६ ॥

पुनःपुनर्मेवशमापद्यते ॥ ६ ॥ यदाश्रवणादिप्रयत्नवतोपिनसांपरायःप्रतिभाति किमुतप्रमादादिमतइतिभावेनाह ॥ श्रवणायापीति ॥ बहुभिःश्रवणायापिश्रोतुमपिनलभ्यः प्राणिनांमध्येबहूनांप्राणिनांभगवद्विषयकश्रवणमपिनास्तीत्यर्थः । अस्तिकेषांचित्श्रवणं तथापिनसांपरायस्तेषांयथार्थतःप्रतिभातीत्याह ॥ शृण्वंतोपीति ॥ कुतइत्यतोवक्तृश्रोतृदौर्लभ्यादित्याह ॥ आश्चर्यइति ॥ कुशलेनगुरुणानुशिष्टोस्यभगवतोयथार्थतोज्ञाताज्ञानानुसारेणास्यवक्ताआश्चर्योदुर्लभः । कुशलोस्यभगवतोलब्धागुरूक्तप्रकारेणज्ञाताश्रोताप्याश्चर्यइतियोजना ॥ ७ ॥ ननुशैवादिशास्त्रव्याख्यातृणांबहूनामुपलंभेनतएवास्यवक्तारोभविष्यंतीतिकथंदुर्लभइत्यतआह ॥ ननरेणेति ॥ नरेणमनुष्येण शैवब्राह्मसौरगाणपत्यादिना प्रोक्तएषःसुज्ञेयोनभवति । यतस्तेनावरःप्रोक्तः । शिवादिरेवसर्वोत्तमोभगवांस्तदपेक्षयाऽवरइत्युक्तः । तर्हितदुक्तप्रकारेणायमवरएवकिंनस्यादित्यतआह ॥ बहुधेति ॥ बहुगुणत्वेनपूर्णगुणत्वेनचिंत्यमानोवेदादिभिर्यतोतोनायंतेनतथोक्तोप्यवरस्तस्यमिथ्याज्ञानित्वादितिभावः । तर्हिमास्तुशैवादिरस्यवक्ता अद्वैतवादीतुभविष्यतीत्यतआह ॥ अनन्येति ॥ अन्योभगवानन्योहमित्यजानन् सएवाहमितिजानंश्चानन्यः तेन प्रोक्तेअत्रब्रह्मणिगतिर्ज्ञानंसम्यग्ज्ञानंनजायते कुतः जीवेश्वरयोर्विरुद्धधर्माधिकरणत्वेनभिन्नत्वात्तदभेदज्ञानिनोमिथ्याज्ञानित्वा

---

उप ॥ श्रवणायापिबहुभिर्योनलभ्यःशृण्वंतोबहवोयन्नविद्युः । आश्चर्योस्यवक्ताकुशलोस्यलब्धाआश्चर्योज्ञाताकुशलानुशिष्टः ॥ ७ ॥ ननरेणावरःप्रोक्तएषसुज्ञेयोबहुधाचिंत्यमानः । अनन्यप्रोक्तेगतिरत्रनास्ति ।

दितिभावेनाह । अणुप्रमाणादपिजीवादणीयान्हीति । तस्मादस्ययथार्थतोज्ञाताकुशलानुशिष्टोवक्ताआश्चर्यइतिध्येयं । एवंव्या ख्यात्रभावेनागमात्तज्ज्ञानासंभवेपिप्रत्यक्षेणतज्ज्ञानंसंभवतीत्यतस्तदविषयत्वंचाह ॥ अणीयानिति ॥ अणुप्रमाणादप्यणीया न्हियस्मात्अतःप्रत्यक्षंनभवति ॥ तर्हिअनुमानेनतन्निश्चयोभविष्यतीत्यतआह ॥ अतर्क्यमिति ॥ ८ ॥ तदेवविवृणोति ॥ नैषे ति ॥ आ अपेति विरुद्धार्थकोपसर्गयोःक्रमेणसंबंधः । एषाब्रह्मविषयामतिस्तर्केणकेवलानुमानेनानेयोत्पाद्याऽपनेयानिराकार्या चनभवति । तस्यप्रतिपक्षादिग्रस्तत्वेनाप्रमाणत्वात् । आगमानुकूलतर्कश्चागमव्याख्यात्रभावेननिश्चायकइतिभावः । तर्हिभ गवज्ज्ञानोपायाभावेनमोक्षाभावाच्छास्त्रवैयर्थ्यमेवस्यादित्यतआह ॥ प्रोक्तेति ॥ हेप्रेष्ठ प्रीतिविषयनचिकेतः अन्येनैव अन्यो भगवानन्योहमितिज्ञानवान्योभेदज्ञानीतेनैवप्रोक्ता वेदप्रवचनोत्पादितामतिः सुज्ञानायसाक्षात्कारायभवति । एषामतिरित्यु क्तामतिःकेत्यतआह ॥ यामिति ॥ त्वंयांमतिमापःप्राप्तवानसि एषेतिपूर्वेणान्वयः । तस्मात्हेनचिकेतःत्वंसत्यधृतिरचाल्यधै र्यवानसि । बतेत्यास्वादने । अतस्त्वादृक्प्रष्टानोभूयान्नभविष्यतीत्यर्थः ॥ ९ ॥ नाहंत्वत्पृष्टंवक्तुमसमर्थस्त्वांविषयैःप्रलोभितवान् किंतुत्वत्परीक्षणार्थमेव । यतस्त्वत्पृष्टंजानामीत्याह ॥ जानामीति ॥ अनित्यंआख्यविष्णवाख्यनित्यंवस्तु शेवधिःसुखनिधिरि तिजानामि । तत्ध्रुवंनित्यंविष्णवाख्यं अध्रुवैस्तद्भक्तिदार्ढ्यशून्यैर्नप्राप्यतेहियस्मात्ततोमयैवंजानताऽनित्यद्रव्यैर्नित्यमाख्यविष्णु

उप ॥ अणीयान्ह्यतर्क्यमणुप्रमाणात् ॥ ८ ॥ नैषातर्केणमतिरापनेयाप्रोक्तान्येनैवसुज्ञानायप्रेष्ठ । यांत्वमापस्सत्यधृतिर्बतासित्वादृङ्नोभूयान्न चिकेतःप्रष्टा ॥ ९ ॥ जानाम्यहंशेवधिरित्यनित्यंनह्यध्रुवैःप्राप्यतेहिध्रुवंतत् । ततोमयानचिकेतश्चितोग्निरनित्यद्रव्यैःप्राप्तवानस्मिनित्यं ॥ १० ॥

विषयद्रव्यैःमनआदिभिर्नाचिकेतोग्निःचितस्तेनाहंनित्यंभगवंतंप्राप्तवानस्मीत्यर्थः ॥ १० ॥ सत्वंप्रियान्प्रियरूपांश्चकामानभिध्यायन्नचिकेतोत्यस्राक्षीरित्युक्तं । तत्रनचिकेतसःकामविसर्जनेकिंनिमित्तमित्यतोनंतलोकाप्तिमित्याद्युक्तप्रकारेणमुक्तनियामकभगवत्स्वरूपज्ञानमेवेत्याशयवानाह ॥ कामस्येति ॥ हेनचिकेतस्त्वंजगतःस्वर्गलोकस्य प्रतिष्ठांधारकं क्रतोरानंत्यंआनंत्यहेतुमभयस्यपारंमोक्षहेतुमितियावत् । प्रतिष्ठां मोक्षेप्रवेश्यं । मोक्षेयस्मिन्प्रवेशःस्यात्सप्रतिष्ठाहीत्युक्तेः । स्तोममहत् । स्तोमेभ्योवेदसमूहेभ्योमहांतं । वेदसमूहैरपिसर्वात्मनाप्रतिपादयितुमशक्यमितियावत् । अतएव उरुगायं उरुभिर्वेदैरुरुभिर्ब्रह्मादिभिरुरुत्वेनसर्वोत्कृष्टत्वेनगीयतइत्युरुगायनामानंभगवंतंदृष्ट्वा धृत्याधैर्येणकामस्याप्तिमत्यस्राक्षीः ॥ ११ ॥ वक्ष्यमाणरीत्यामुक्तनियामकभगवत्स्वरूपज्ञानेनैवमोक्षप्राप्तिः । सामान्यादग्निस्थभगवज्ज्ञानेपिवक्ष्यमाणरीत्यामुक्तनियामकभगवज्ज्ञानाभावेमोक्षासंभवात् । अतएवतत्स्वरूपकथनेममातिकृच्छ्रतेतिभावेनमुक्तस्थितभगवज्ज्ञानस्यमोक्षसाधनत्वमाह ॥ तमिति ॥ धीरोधिकारीगह्वरेमुक्तजीवेतिष्ठतीतिगह्वरेष्ठं । तत्रापिगुहाहितंमुक्तजीवहृद्गुहानिहितं । अतएवगूढंगूढत्वमनुप्रविष्टंप्राप्तं अतएव दुर्दर्शं पुराणंसनातनं अनाद्यनंतकालेषुमुक्तस्थत्वोपपादकमेतत् । देवंक्रीडादिगुणसंपन्नंभगवंतंमत्वाध्यात्वा अध्यात्मयोगाधिगमेन अधिकश्चासावात्माचाध्यात्मा सएवयोगोमोक्षोपायइत्यध्यात्मयोगस्तस्याधिगमस्तदपरोक्षज्ञानंतेन । अध्यात्मयो

उप० । कामस्याप्तिंजगतःप्रतिष्ठांक्रतोरानंत्यमभयस्यपारं । स्तोममहदुरुगायंप्रतिष्ठांदृष्ट्वाधृत्याधीरोनचिकेतोत्यस्राक्षीः ॥ ११ ॥ तंदुर्दर्शंगूढमनुप्रविष्टंगुहाहितंगह्वरेष्ठंपुराणं । अध्यात्मयोगाधिगमेनदेवंमत्वाधीरोहर्षशोकौजहाति ॥ १२ ॥

गोध्यानयोगस्तज्जन्याधिगमेनवा । हर्षशोकौजहाति ॥ १२ ॥ ननुहर्षशोकौजहातीतिसुखप्रहाणिरुच्यते । तदयुक्तं । तुल्यायव्ययफलत्वे नापुरुषार्थत्वप्रसंगादित्याशंकांपरिहरन् मत्वेत्युक्तमननसाधनंचदर्शयन्भगवतोजीवाद्भेदेनज्ञानमपिमोक्षसाधनमित्याह ॥ एतच्छ्रुत्वेति ॥ योमर्त्योमरणशीलोधिकारी । नश्रवणादिविषयेप्रमदितव्यमितिभावेनैतदुक्तं । सएतत् मुक्तनियामकभगवत्स्वरूपंश्रुत्वाकुशलानुशिष्टाचार्येभ्यःसंपरिगृह्य सम्यगवधार्य सम्यङ्मत्त्वेतियावत् । प्रवृह्यजीवात्पृथक्कृत्यपृथक्त्वेननिश्चित्य । निदिध्यासनापरोक्षज्ञानद्वारामुक्तःसन् धर्म्यं धारकत्वाद्धर्मो धर्मएवधर्म्यस्तमणुंपरमसूक्ष्ममेनंभगवंतमाप्यमोदतेइत्यर्थः । वैषयिकहर्षप्रहाणिरेवप्राग्विवक्षितेतिभावः । एतादृशोभगवांस्त्वयापृष्टोतस्तवापिमोक्षोनिश्चितएवेत्याह ॥ मोदनीयमिति ॥ मोदनीयंसंतोषणीयंभगवंतंलब्ध्वाज्ञात्वास्थितंनचिकेतसंप्रति । सद्म वैकुंठादिस्थितब्रह्मसदनं विवृतमपावृतं हिनिश्चितमितिमन्ये ॥ १३ ॥ एवंयमेनोक्तोनचिकेताअलंप्रशंसयातत्वंब्रूहीतिप्रवृह्येत्यनेनोक्तंजीवाद्भेदंसविशेषमनुवंदन्प्रार्थयते ॥ अन्यत्रेति ॥ अव्ययानामनेकार्थत्वादन्यत्रेत्यस्यान्यदित्यर्थः । धर्मात्पुण्यात्मनोजीवादन्यत् अधर्मात्मनोजीवादन्यत् नकेवलंचेतनादेव किंतुकृताकृतात् कार्याकार्यात्अचेदनादप्यन्यत् नकेवलंवर्त्तमानादेव किंतुभूतात्भव्याच्चान्यत् तत्मुक्तनियामकंब्रह्म यत्येनप्रकारेणत्वंपश्यसि तत्तेनप्रकारेणवदेत्यर्थः ॥ १४ ॥ एवंप्रार्थितोयमोबुद्ध्यारोहार्थं

उप० । एतच्छ्रुत्वासंपरिगृह्यमर्त्यःप्रवृह्यध(र्म)र्म्यमणुमेनमाप्य । समोदतेमोदनीयंहिलब्ध्वाविवृतंसद्मनचिकेतसंमन्ये ॥ १३ ॥ अन्यत्रधर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्रभूताच्चभव्याच्चयत्तत्पश्यसितद्वद ॥ १४ ॥

संग्रहेणभगवत्स्वरूपवचनंप्रतिजानीते ॥ **सर्वइति** ॥ संग्रहेणकथनस्यानुपादेयताशंकापरिहारायसर्वेवेदाइत्याद्युक्तं । सर्वेवेदाऋगाद्यायत्पदंयस्यस्वरूपंआमनंति तपांसिचयत्प्रतिवदंतिवेदाः यज्ज्ञानमिच्छंतोब्रह्मचर्यंगुरुकुलवासादिरूपं गुह्येंद्रियनियमनंवा चरंति तत्पदंभगवत्स्वरूपंतेतवसंग्रहेणब्रवीमि । एवंप्रतिज्ञातंभगवत्स्वरूपंउपदिशति ॥ **ॐमित्येतदिति** ॥ एतत्त्वयापृष्टंभगवत्स्वरूपं ॐ गुणपूर्णत्वादोंनामकमित्युपासीतेतिशेषः । उपदेशसमाप्तौवाइतिशब्दः । अन्यथाभावनिवृत्त्यर्थंवा । इतिशब्दोन्यथाभावनिवृत्त्यर्थमुदाहृतइत्युक्तेः ॥ १५ ॥ ॐनामकस्यैवभगवतोमाहात्म्यमाह ॥ **एतदिति** ॥ एतदेवोन्नामकमेवाक्षरंअव्ययं देहादिनाशशून्यं ब्रह्मगुणपूर्णंहि एतदेवाक्षरंपरंसर्वोत्तमंहि । अतएवैतदेवाक्षरंज्ञात्वायोधिकारीयदिच्छति तस्य तत्भवति हिप्रसिद्धमित्यर्थः ॥ १६ ॥ एतत् ॐनामकंब्रह्म श्रेष्ठमालंबनं मुख्यतःसर्वाश्रयः । नराजादिवदाश्रयइत्याह । एतत्परंविलक्षणमालंबनमिति । ब्रह्मलोकेसत्यलोकेविष्णुलोकेवामहीयतेपूज्यतेस्वावरैः ॥ १७ ॥ ननुब्रह्मलोकंप्राप्तस्यापिज्ञानिनोयदिजनिमृती तदानतदतिशयितंफलमित्यतआह ॥ **नजायतइति** ॥ विपश्चित्ज्ञानीब्रह्मलोकंप्राप्तोनजायतेनम्रियतेच । कुतः यतोयंभगवान्कुतोपिनबभूव उपलक्षणमेतत् । नम्रियतेच । अतस्तद्भक्तापिनजायतेनम्रियतेच । अत्रविपश्चितोजननमर

उप० । सर्वेवेदायत्पदमामनंतितपांसिसर्वाणिचयद्वदंति । यदिच्छंतोब्रह्मचर्यंचरंतितत्तेपदंसंग्रहेणब्रवीमि । ओमित्येतत् ॥ १५ ॥ एतद्ध्येवाक्षरं ब्रह्मएतद्ध्येवाक्षरंपरं । एतद्ध्येवाक्षरंज्ञात्वायोयदिच्छतितस्यतत् ॥ १६ ॥ एतदालंबनंश्रेष्ठमेतदालंबनंपरं । एतदालंबनंज्ञात्वाब्रह्मलोकेमहीयते ॥ १७ ॥ नजायतेम्रियतेवाविपश्चिन्नायंकुतश्चिन्नबभूवकश्चित् ।

णराहित्यंनामदेहोत्पत्तिविनाशशून्यत्वमेव । नतुस्वरूपोत्पत्तिविनाशशून्यत्वं तस्यसर्वजीवसाधारणत्वादितिभावेनाह ॥ नब भूवेति ॥ यतःकश्चिदपिजीवःस्वरूपेणनबभूव । नजातोनजायतेनजनिष्यतेच । अतएवनम्रियतेच । किंतुदेहसंबंधादेवजायतेम्रियतेच । अतोविपश्चित्‌देहोत्पतिविनाशशून्यत्वादेवनजायतेनम्रियतेचेत्यर्थः । ननुजीवस्यदेहित्वात्कथंस्वरूपेणजननाद्यभावइत्यतआह ॥ अजइति ॥ जीवःपुराणोपिपुरंदेहमणन्नपिस्वरूपेणाजोनित्यःशाश्वतोअविकारश्च । नित्यत्वमेवस्पष्टमाह । नहन्यतइति । देहेहन्यमानेपिजीवःस्वरूपेणनहन्यते तस्यततोभिन्नत्वादितिभावः ॥ १८ ॥ नन्वेतत्कथं जीवहननस्य अहंहंतातेनाहंहतइत्यादिप्रत्यक्षसिद्धत्वादित्यतस्तस्यभ्रांतित्वमाह ॥ हंतेति ॥ हंता मैत्रदेहहननकर्त्ताचैत्रः स्वात्मानंहंतुं हंतारं मैत्रजीवस्वरूपहननकर्त्तारंमन्यतेचेत् हतश्चमैत्रःस्वस्वरूपंहतंमन्यतेचेत् तर्हितौउभौनविजानीतोनसम्यग्जानीतः । भ्रांतावितियावत् । कुतइत्यतस्तत्रार्थाभावंहेतुमाह ॥ नायमिति ॥ अयंचैत्रोनहंति । मैत्रस्वरूपं अयंमैत्रोवास्वरूपेणनहन्यते यतोतोदेहविनाशनिमित्तकोयंभ्रमइत्यर्थः ॥ १९ ॥ उपदेशप्रकारमेवाह ॥अणोरिति॥ आत्माभगवानणोरणीयान् सूक्ष्मादपिसूक्ष्मतरः । महतोमहीयान् स्थूलादपिस्थूलतरः । स्थूलस्यैवाणुप्रतियोगित्वात्‌अणोरणीयस्त्वमेवलेशेनदर्शयति । अस्यैवंनित्यस्यजंतोर्जीवस्यपरमसूक्ष्मस्यापिगुहायांहृदयेनिहितइति । एतद्ध्येवाक्षरंज्ञात्वेत्यत्रनज्ञानमात्रंविवक्षितं किंत्वपरोक्षज्ञानमेवेतिभावेनतत्सा

उप० । अजोनित्यश्शाश्वतोयंपुराणोनहन्यतेहन्यमानेपिदेहे ॥ १८ ॥ हंताचेन्मन्यतेहंतुंहतश्चेन्मन्यतेहतं । उभौतौनविजानीतोनायंहंतिनहन्यते ॥ १९ ॥ अणोरणीयान्महतोमहीयानात्मास्यजंतोर्निहितोगुहायां ।

धनंदर्शयन्तस्यफलमाह ॥ **तमिति** ॥ अक्रतुः अशब्दोविष्णुवाची । एविष्णौक्रतुःनिश्चयोयस्यासौअक्रतुस्तन्निश्चयवानधिकारी आत्मनोजीवात् महिमानं महि महत् मानंगुणपरिमाणंयस्यसमहिमानस्तंपरमात्मानं । धातुःधारकस्यपरमात्मनःप्रसादात् पश्यति । ततश्चधातुःप्रसादादेववीतशोकोभवतीत्यर्थः ॥२०॥ पुनरपितन्माहात्म्यमाह ॥ **आसीनइति** ॥ आसीनःउपविष्टएवदूरंव्रजति । शयानएवसर्वतोयातिपरमैश्वर्यात् । तंमदामदं मदःसुखं अमदोदुःखं मदसहितोऽमदोयेनासौमदामदस्तं विबुधासुरसुखदुःखकारणमितियावत् । भगवंतंमदन्यःकोवामद्वत्ज्ञातुमर्हति नकोपीत्यर्थः । योमदन्यस्तंमदामदंकोवासाकल्येन ज्ञातुमर्हति । नकोपीतिवायोज्यं । यद्वामदन्यःकोब्रह्मैवतंमदामदंदेवंसकलवेदोक्तप्रकारेणज्ञातुमर्हति नत्वन्यइत्यर्थः ॥ २१ ॥ अशरीरं प्राकृतशरीरशून्यं अनवस्थेषुनश्वरेष्वपिशरीरेषुअवस्थितं महांतंविभुंव्याप्तमात्मानंधीरोमत्त्वानशोचति ॥२२॥ धातुःप्रसादोज्ञानमोक्षहेतुरित्युक्तमयुक्तं । प्रवचनादिनैवज्ञानमोक्षयोरुपपत्तेरित्यतआह ॥**नायमिति**॥ अयमात्माभगवान्प्रवचनेनवेदव्याख्यानेनैवलभ्योज्ञेयःप्राप्यश्चन मेधयैवलभ्योन नापिबहुनाश्रुतेनैव किंतुएषआत्माप्रसन्नःसन्मदीयोयमितियंवृणुतेतेनलभ्योज्ञेयःप्राप्यश्च । ततश्चैषआत्मातस्याधिकारिणःस्वांतनुंस्वस्वरूपंपूर्वमविद्यावृतंविवृणुतेप्रकाशयतीत्यर्थः। यद्वाज्ञानमोक्षहेतुःप्रसादोपिनप्रवचनादिमात्रसाध्यः किंतुभक्त्येकसाध्यइत्याह ॥**नायमिति**॥ लभ्यःप्रसन्नोभवति। वृणुतइत्यनेनभक्तत्वंसूचितं ।

---

उप० ॥ तमक्रतुःपश्यतिवीतशोकोधातुःप्रसादान्महिमानमात्मनः ॥२०॥ आसिनोदूरंव्रजतिशयानोयातिसर्वतः । कस्तंमदामदंदेवंमदन्योज्ञातुमर्हति ॥२१॥ अशरीरंशरीरेषुअनवस्थेष्ववस्थितं । महांतंविभुमात्मानंमत्वाधीरोनशोचति ॥२२॥ नायमात्माप्रवचनेनलभ्योनमेधयानबहुनाश्रुतेन । यमेवैषवृणुतेतेनलभ्यस्तस्यैषआत्माविवृणुतेतनूंस्वां ॥ २३ ॥

ततश्चतस्याधिकारिणएषआत्मास्वस्वरूपंतद्योग्यतानुसारेणविवृणुतेप्रकाशयतीत्यर्थः ॥ २३ ॥ शमदमादिसाधनैरेवभगवत्प्राप्त्युपपत्तौकिंतज्ज्ञानेनेत्यतआह ॥ नेति ॥ योदुश्चरितात्इंद्रियाणांदुष्टविषयेषुचरणादविरतोऽनिवृत्तोन किंतुसर्वात्मनानिवृत्तएव निगृहीतेंद्रियएवेतियावत् । अशांतोभगवन्निष्ठबुद्धिरहितोन किंतुतन्निष्ठबुद्धिरेव असमाहितोयथावस्तुज्ञानादिशून्योन किंतुयथावस्तुज्ञानादिमानेव अशांतमानसोविषयालंबुद्धिशून्योन किंतुविषयालंबुद्धिमानेव सोपिप्रज्ञानेनैवभगवदपरोक्षज्ञानेनैवएनंप्राप्नुयादित्यर्थः ॥ २४ ॥ भगवतःसर्वसंहारकत्वरूपंमाहात्म्यंवदंस्तस्यदुर्ज्ञेयत्वमाह ॥ यस्येति ॥ यस्यभगवतोब्रह्मचक्षत्रंचेत्युभेओदनः अशनेभवतः तत्रब्रह्मशब्देनब्राह्मणजात्यभिमानीस्वयंब्राह्मणश्चतुर्मुखाख्योग्राह्यः क्षत्रशब्देनक्षत्रजात्यभिमानीस्वयंक्षत्रियोवायुः यथोक्तं विष्णोर्ब्राह्मणजातिःसन्ब्रह्माजज्ञेचतुर्मुखइत्यादि । मृत्युर्मारणात्मृत्युनामारुद्रः । मृत्युनामातुसंहाराद्रुद्रइतिवचनात् । यस्यभगवतउपसेचनं व्यंजनंघृतंत्रा तंभगवंतंइत्थाउक्तप्रकारेणकोवेद न कोपि यत्रवैकुंठादौसतिष्ठतितच्चकोवेदेतियोजना । यद्वाकश्चतुर्मुखएवेत्थावेदोक्तप्रकारेण तंवेद सोपिकिंस्वसामर्थ्येननेत्याह॥ **यत्रसइति** ॥ यत्रकेब्रह्मणिसपरमात्मातिष्ठति नियामकतया सइत्यन्वयः । एवंचस्वांतर्गतभगवत्प्रसादादेववेदेतिलभ्यते । यद्वाकइतिकिंशब्दोयच्छब्दार्थः । यइत्थावेद सयत्र सभगवान्यत्रतिष्ठतितत्रतिष्ठतीत्यर्थः ॥ २५ ॥ **प्रथमाध्यायस्य**

उप० । नाविरतोदुश्चरितान्नाशांतोनासमाहितः । नाशांतमानसोवापिप्रज्ञानेनैनमाप्नुयात् ॥ २४ ॥ यस्यब्रह्मचक्षत्रंचोभेभवतओदनः । मृत्युर्यस्योपसेचनंकइत्थावेदयत्रसः ॥ २५ ॥ इतिकाठकेप्रथमेद्वितीयावल्ली ॥ १ । २ ॥

द्वितीयावल्ली ॥१।२॥ अध्यात्मयोगाधिगमेनेतिभगवतोध्यानमुक्तं। सकुत्रध्येयइत्यतस्तन्निरूपयन् पुनरपिभगवन्माहात्म्यमाह। ऋतमित्यादिना। केचित्तु ऋतंपिबंतावित्यत्रबुद्धिजीवावुच्येते द्विवचनश्रुतेः। नचबुद्धौकर्मफलभोक्तृत्वानुपपत्तिः। जीवस्यभोक्तृत्वेनतत्सहितबुद्धौछत्रिन्यायेनोपचारोपपत्तेरित्याहुः। तदपरेनक्षमंते। अन्यतरस्यपातृत्वेनजीवत्वेसिद्धेद्वितीयस्यचेतनतयैवभाव्यत्वात्। अस्यगोर्द्वितीयोन्वेष्टव्यइत्यादौसजातीयग्रहणस्यैवलोकेदर्शनात्। नचैवंजीवांतरंग्राह्यं। एकस्मिन्शरीरेभोक्तृजीवद्वयायोगात्। तस्माज्जीवेश्वरावेवात्रोच्येते। नचेशस्यकर्मफलभोगायोगः। छत्रिन्यायेनपातृजीवसंबंधात्पिबंतावित्युपचारादिति। तदसत्। पिबतोर्बुद्धिजीवत्वजीवेश्वरत्वयोर्हानिलाभादर्शनात्। पातृत्वस्यजीवनिष्ठत्वस्यतेनाप्यंगीकारात्। बुद्धाविवौपाचारिकत्वस्येश्वरेत्वयाप्यंगीकारात्। तस्मादयंमंत्रःईश्वरमात्रपरएव। तथासतिद्विवचनानुपपत्तिरितिचेन्न। तस्यद्विरूपत्वाभिप्रायेणसावकाशत्वादितिभावेनमंत्रंप्रमाणेनैवव्याचष्टे॥ आत्मेति॥ आत्मादेहहृदयेस्थितः अंतरात्माजीवहृदयेस्थितइत्याहुः। तत्वप्रकाशिकायांतुद्विरूपतयाविष्णुर्देहनिविष्टइत्युक्तं। स्थितोहृदयइतिशेषः। तेनगुहांप्रविष्टावित्येतद्व्याख्यातं। परमेपरार्धइत्यस्यबाह्याकाशस्थानापेक्षयापरमंपरस्यब्रह्मणः। स्थानंपरार्द्धंहार्दाकाशः। तत्रपरब्रह्मोपलभ्यते। तस्मिन्परमेपरार्धेहार्दाकाशेप्रविष्टाविति व्याख्यानमसत्। हार्दाकाशस्यपरमत्वाभावात्। बाह्याकाशापेक्षयांतराकाशस्यपरमत्वेनियामकाभावात्। नचतत्रपरब्रह्मोपलब्धिर्नियामिका। बाह्याकाशेपियोग्यानांपरब्रह्मोपलब्धेः। गुहांप्रविष्टावित्यनेनैवहार्दाकाशस्थितिलाभाच्च।

---

भाष्यं। आत्मांतरात्मेतिविभुरेकएवद्विधास्थितः। सविष्णुः

प्रमाणविरोधाच्चेतिभावेनव्याचष्टे ॥ **परमइति** ॥ सर्वजीवोत्तमेइत्यर्थः । परेभ्योपिरुद्रादिभ्यऋद्धरूपकेऽतिपरिपूर्णस्वरूप इत्यर्थः । सविभुर्विष्णुरेकएवात्मांतरात्मेतिद्विधाहृदये तत्रापिपरमे परेभ्योपिऋद्धरूपकेवायौस्थितइत्यन्वयः । विष्णुशब्दव्याख्यानंविभुरिति । तथापिकथमयंमंत्रःईश्वरपरः । तस्यकर्मफलपातृत्वायोगादितिचेन्न । रसंपिबतिकर्मजमित्यादिवचनेनेश्वरस्यापिकर्मफलपातृत्वश्रवणात् । तथासतिदुःखभोगोऽनश्नन्नन्योभिचाकशीतीत्यादिश्रुतिविरोधश्चस्यादित्यतः ऋतंपिबंतावित्येतद्व्याचष्टे ॥ **शुभानिति** ॥ सावधारणमेतत् । पिबतिअनुभवति । भुज्यंतइतिभोगाविषयाः । ऋतंसत्यंतथाधर्मइतिस्मृतेःऋतशब्दस्यधर्मवाचकत्वाच्छुभानित्युक्तं । प्रत्युतजीवपक्षएवेदमनुपपन्नं । तस्याधर्मफलंप्रत्यपिभोक्तृत्वात् । नचापूर्णानंदत्वप्रसंगः । अचिंत्यैश्वर्यबलेनसुखभोगोपपत्तेः । अशुभभोगाभावविषयंतद्वाक्यमितिभावः । नन्वेवमस्येश्वरपरत्वेछायातपत्वविरोधः । तयोर्विद्धदविद्धत्परत्वेनजीवेश्वरपरत्वावगमादित्यतआह ॥ **छायेवेति** ॥ छायेवसुखकारणमित्यर्थः । आतपइत्यत्रापिइवशब्दोनुवर्तते । दुःखकारणमित्यर्थः । नचैवमौपचारिकत्वंदोषः । त्वन्मतेपिछायातपावित्यस्यविद्धदविद्धद्वाचकत्वाभावेनामुख्यार्थस्यग्राह्यत्वात् । नन्वेवंकिंबलाद्विष्णुमात्रपरत्वेनव्याख्यायतइतिचेत् । गुहाप्रविष्टत्वलिंगादेव । तच्चविष्णुमात्रनिष्ठमित्युक्तं । किंचयस्सेतुरितिपिबतोरेकवचनेनविशेषणादेकएवपाता । अतएवश्रुतौद्विवचनप्रयोगेपिभाष्येएकवचनप्रयोगः । सचयाजकसेतुत्वादिविशेषणाच्चविष्णुरितिभावेन सेतुरीजानानामितिवाक्यंसर्वेषांयाजिनामित्यन्यथाप्रतीतिनिरासायव्याचष्टे

भाष्यं ॥ परमेवायौपरेभ्योप्यृद्धरूपके । शुभान्पिबतिभोगान्सछायेवविदुषांप्रभुः । आतपःपापिनांनित्यं

॥ **मर्यादेति** ॥ सद्धिस्वरूपकोविष्णुर्विष्णुमुद्दिश्ययाजिनांमर्यादाआश्रयइत्यर्थः । एतेनयत्परैरुक्तं यःसेतुरीजानानांतंनाचिकेतमग्निं यच्चाक्षरंपरंब्रह्माभयंपारंसंसारपारंतीतिर्षतामाश्रयश्च तच्चशकेमसि परापरब्रह्मणी कर्मब्रह्मविदाश्रयेवेदितव्येइतिवाक्यार्थइति । तदपिपरास्तं । यःसेतुरीजानानां यच्चाक्षरंपरंब्रह्म तंनाचिकेतमग्निंशकेमसीत्येकवाक्यत्वसंभवेवाक्यभेदाश्रयणायोगात् । त्वत्पक्षेजीवेश्वरस्वरूपनिरूपणावसरेग्निस्वरूपनिरूपणस्यासंगतत्वाच्च । अपरब्रह्मभूताग्नेःकर्मविदाश्रयस्यज्ञातव्यत्वस्यप्रागेवोक्तत्वाच्चेति । संसारपारंतितीर्षतामितिव्याख्यानमसत् । पारमित्यस्यपृथग्विशेषणत्वेगुणांतरलाभात् । मुमुक्षूणांसंसारपारमोक्षतितीर्षायाअभावाच्चेतिभावेन पारमित्येतत्सोपस्करंव्याचष्टे ॥ **संसारस्येति** ॥ संसारस्यपारोमोक्षस्तस्मिंस्तिष्ठतीत्यर्थः । इंद्रियेभ्यइतिमंत्रंजडानामेवतारतम्यमुच्यतइत्यन्यथाप्रतीतिनिरासायव्याचष्टे ॥ **देवेभ्यइति** ॥ इंद्रियात्मभ्यः इंद्रियाभिमानिभ्यइत्यर्थः । अनेनश्रुताविंद्रियार्थादिशब्दाअभिमान्यधिकरणन्यायेनतदभिमानिपराइत्युक्तंभवति । केतेइंद्रियाभिमानिनोदेवाइत्यतआह ॥ **सोमेति** ॥ दक्षश्चेत्येतेदशेंद्रियेशाः । तत्रश्रोत्रस्यसोम स्त्वचोवित्तप श्चक्षुषःसूर्यो रसनस्याऽऽप्पोवरुणो घ्राणस्याश्विनौ वाचोग्निः पाण्योरिंद्रः पादयोरिंद्रसूनुर्जयंतः पायोर्यमो गुह्यस्यदक्षइतिविवेकः । श्रोत्राद्यभिमानिनोबहवइतिअन्यत्रान्यथोक्तावप्यविरोधः। केतेअर्थाभिमानिनो येषामिंद्रियदेवेभ्यउत्तमत्वमित्यतआह ॥**सु(सौ)पर्णीति**॥

---

भाष्यं । मर्यादाविष्णुयाजिनां । संसारस्यचपारस्थस्सविष्णुर्द्विस्वरूपकः । देवेभ्यइंद्रियात्मभ्योज्यायांसोर्थाभिमानिनः । सोमवित्तपसूर्याप्पाश्व्यग्नींद्रेंद्रसूनवः । यमोदक्षश्चेंद्रियेशाःसु(सौ)पर्णीवारुणीतथा ।

ननुशब्दादयःपंचार्थाः । सौपर्ण्याद्यास्तुतिस्रः । अतःकथंतासांतदभिमानित्वमित्यतआह ॥ **द्विद्व्येकदेवताइति** ॥ **द्वौचद्वौ** चैकश्चद्विद्व्येकेद्विद्व्येकेषांदेवताद्विद्व्येकदेवताः । सुपर्णीवारुण्यौद्वयोर्द्वयोरभिमानिन्यौ । उमात्वेकस्येत्यर्थः । तत्रसुपर्णीशब्द स्पर्शयो र्वारुणीरूपरसयो रुमागंधस्येतिविवेकः । अर्थेभ्यश्चपरंमनइतिवाक्यंव्याख्यातुंमनोभिमानिदेवताआह ॥ **मनोभिमा निनइति** ॥ अपिरभिव्याप्तौ । इंद्रकामादिव्यावृत्त्यर्थंतुशब्दोवधारणार्थः । इदानींतद्वाक्यंव्याचष्टे ॥ **तेइति** ॥ मनसस्तु पराबुद्धिरितिवाक्यंव्याचष्टे ॥ **तेभ्यइति** ॥ मनोभिमानिभ्यः । लिंगवचनव्यत्ययेनश्रेष्ठेत्यनुवर्त्तते । बुद्धेरात्मामहानितिवैय धिकरण्यप्रतीतिनिरासायतद्व्याचष्टे ॥ **तस्याइति** ॥ वायुरपिग्राह्यः । महान्महत्तत्वाभिमानी । आत्मासर्वजीवस्वामी । महतःपरमव्यक्तमित्येतद्व्याचष्टे ॥ **ततइति** ॥ अव्यक्तात्पुरुषःपरःइत्येतद्वाक्यंव्याचष्टे ॥ **तस्यास्त्विति** ॥ पुरुषशब्दप्रवृत्ति निमित्तमाह ॥ **पूर्णत्वादिति** ॥ पूर्णषड्गुणत्वादित्यर्थः । पुरुषान्नपरंकिंचित्साकाष्ठासापरागतिरितिपुरुषाच्छ्रेष्ठोनास्तीत्युक्तं । तत्कैमुत्येनसाधयति ॥**नैवेति**॥ कुतश्चित्कुत्रापिदेशेकालेवा । ननुरमासमाभावेपितदधिकवत्भगवदधिकोपिकिंनस्यादितिचेन्न । भगवतएवरमासमस्यसत्त्वात् । नहितदधिकःतत्सदृशगुणवान्नेतियुक्तं । पुरुषादुत्तमस्यपाशुपतादिशास्त्रेषुकथनात्कथमेतदित्यत उक्तं ॥ **साकथेति** ॥ किंस्वित्यनुवर्त्तते । साकथा श्रेष्ठोस्तीतिकथा किमु कथमुपपन्ना । उक्तयुक्तिविरुद्धत्वादित्यर्थः ॥ य

भाष्यं । उमेतिचार्थमानिन्यस्तिस्रोद्विद्व्येकदेवताः । मनोभिमानिनोरुद्रवींद्रशेषास्त्रयोपितु । तेश्रेष्ठाअर्थमानिभ्यस्तेभ्योबुद्धिस्सरस्वती । तस्याब्रह्मामहानात्माततोऽव्यक्ताभिधारमा । तस्यास्तुपुरुषोविष्णुःपूर्णत्वान्नैवतत्समः । कश्चित्कुतश्चिच्छ्रेष्ठस्तुनास्तीतिकिमुसाकथा ।

च्छेद्वाङ्मनसीप्राज्ञइत्यादिकमपिप्रसिद्धजडवागादिपरमितिप्रतीतिनिरासायप्रमाणेनव्याचष्टे ॥ **तस्मादिति** ॥ उक्तरीत्याउमादीनांपरस्परनियम्यनियामकभावसत्त्वादित्यर्थः । वागात्मिकाःवागभिमानिनीःशिवादिषुनियच्छेदित्यन्वयः ॥ यद्यपिप्राक्वागभिमान्यग्निरुक्तस्तथापितस्यसाक्षान्मनोभिमानिरुद्रादिनियम्यत्वाभावादुमाद्यागृहीताः । अनेनयच्छेद्वाङ्मनसीप्राज्ञइत्येतद्व्याख्यातं । शिवादीन्ब्रह्मवाय्वोस्तुनियच्छेदित्यत्रसरस्वतीद्वारेतिग्राह्यं । तद्यच्छेज्ज्ञानआत्मनि । ज्ञानमात्मनिमहतीत्युक्तत्वात् । तद्यच्छेच्छांतआत्मनीतिमहदभिमानिब्रह्मवाय्वोःसाक्षाद्भगवन्नियतत्वमुच्यते । तदयुक्तं । महतःपरमव्यक्तमित्युक्तत्वात्इत्यतआह ॥ **तौरमायामिति** ॥ परानंदइतिशांतशब्दार्थः । आत्मशब्दार्थःपरमात्मनीति । यच्छेदित्यनेनवागादीनांमनआदौनियमनकर्तृत्वंजीवस्योच्यतइतिप्रतीतिनिरासायतस्यविवक्षितमर्थमाह ॥ **तद्वशत्वेनेति** ॥ प्रतीतएवार्थः किंनस्यादित्यतआह ॥**कुतस्त्विति**॥ तत्रहेतुर्विनियामकानिति । अनाद्यनंतंमहतःपरमितिवाक्येऽव्यक्तमेवप्रतिपाद्यते । महत्परत्वलिंगात् । महांतंचसमावृत्यप्रधानंसमवस्थितमितिवचनात् । महतःपरमव्यक्तमितिअव्यक्तस्यैवमहतःपरत्वेनप्रकृतत्वाच्चेति कश्चित् । तदसत् । तस्यमोक्षार्थंज्ञेयत्वानुपपत्तेः । सोध्वनःपारमाप्नोतितद्विष्णोःपरमंपदमितिवचनात्अस्यविष्णुप्रकरणत्वाच्च । अत्रोक्तरीत्यापितृसौमनस्यस्वर्ग्याग्निपरमात्मनांत्रयाणामेवप्रश्नेनतत्स्वरूपस्यैवोपन्यासादव्यक्तकथनस्यासंगतत्वाच्च । तस्मात्प्रा

---

भाष्यं । तस्माद्वागात्मिकादेवीरुमाद्यास्तुशिवादिषु । शिवादीन्ब्रह्मवाय्वोस्तुनियच्छेन्महदात्मनोः । तौरमायांपरानंदेतांविष्णौपरमात्मनि । तद्वशत्वेनतद्ध्यानंनियमोनामनापरः । कुतस्तुमानुषोदेवान्नियच्छेद्विनियामकानितिच ।

ज्ञःपरमात्माहितत्रोच्यते । नचमहतःपरत्वलिंगानुपपत्तिः । महतोपिमहीयानितिश्रुतेः । सर्वस्मात्परस्यमहत्परत्वस्याप्युक्तत्वात् तर्ह्यव्यक्तपरत्वेनप्रकृतेपरमात्मनिविशिष्यमहतःपरत्वंकथमुच्यते । तथोक्तौविशेषकारणाभावादित्यतआह ॥ **स्वभार्यायाइति** ॥ **प्रथमाध्यायस्यस्तृतीयावल्ली** ॥ १ ॥ ३ ॥ (अथखण्डार्थः) ॥ सुकृतस्यलोकेसुकृतनिर्मितशरीरे । **गुहांहृदयगुहांप्रविष्टौ** । तत्रापिपरमेसर्वजीवोत्तमे परार्धे आकृद्धःअर्धः परेभ्योऽर्द्धःपरार्धः । परेभ्योप्यृद्धरूपकेअतिपरिपूर्णेवायौप्रविष्टौ ऋतंसुकृतफलं पिबंतौभुंजानावात्मांतरात्माख्यभगवद्रूपविशेषौ । येपंचाग्नयः पंचमहायज्ञवंतोद्युपर्जन्यादिपंचाग्निविद्यानिष्ठावा त्रिनाचिकेताः त्रिवारकृतनाचिकेताश्चब्रह्मविदस्ते छायातपौविद्वदविदुषोःसुखदुःखकारणीभूतौवंदंति ॥ १ ॥ यत्पूर्वमनंतलोकाप्तिमित्यादि नाग्निस्थभगवत्स्वरूपमुक्तं यच्चओमित्येतदित्यादिनामुक्तनियामकभगवत्स्वरूपमुक्तं तदुभयमेकमेव तद्ध्यानेचाहमेवाधिकारी त्याह ॥ **यःसेतुरिति** ॥ यःपूर्वोक्तोद्विरूपकोविष्णुरीजानानांविष्णुयाजिनांसेतुर्मर्यादा यच्चसंसारभयंतितीर्षतामभयमभयप्र दंपारं संसारस्थं मुक्तनियामकमितियावत् । अक्षरंपरंब्रह्मतं नाचिकेतमग्निंअग्निस्थंभगवंतं शकेमसि ध्यातुंशक्ताःस्मः ॥ २ ॥ इंद्रियनियमनमवश्यंसंपाद्यमितिवक्तुंतदुपयुक्तत्वेनकिंचिदुपदिशति ॥ **आत्मानमिति** ॥ आत्मानंशरीरिणमेव रथिनंरथस्वा

भाष्यं । स्वभार्यायाःपरत्वंसिद्धमितिमहतःपरमित्येवोक्तं ॥ १ । ३ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीकाठकोपनिषद्भाष्येप्रथमोध्यायः ॥ १ ॥

उप० । ओं । ऋतंपिबंतौसुकृतस्यलोकेगुहांप्रविष्टौपरमेपरार्द्धे । छायातपौब्रह्मविदोवदंतिपंचाग्नयोयेचत्रिनाचिकेताः ॥ १ ॥ यस्सेतुरी-जानानामक्षरंब्रह्मयत्परं । अभयंतितीर्षतांपारंनाचिकेतंशकेमसि ॥ २ ॥ आत्मानंरथिनंविद्धिशरीरंरथमेवच ।

मिनंविद्धि शरीरंतुरथंविद्धि अश्वस्थानीयैरिंद्रियैर्विकृष्यमाणत्वात् । बुद्धिंतुसारथिंविद्धि शरीरप्रवर्त्तकत्वात् । बुद्ध्याविचार्य हिकिंचित्करोति । मनःप्रग्रहमेवरशनामेवविद्धि । चशब्दस्तुशब्दार्थः । मनसाप्रगृहीतानांश्रोत्रादीनांप्रवर्तनात् ॥ ३ ॥ इंद्रियाणिहयानाहुः शरीराख्यरथाकर्षकत्वात् । तेषुतेषामिंद्रियाणांगोचरान्शब्दादीन्विषयान् । अश्वसंचारदेशानाहुः । तेष्विंद्रियाणांसंचारात् । सत्वात्मादयोरथ्यादिरूपाः किंततइत्यतोयथासारथिशून्योरथीदुःखभोक्तैवंबुद्धिशून्यआत्मापीत्या ह ॥ आत्मेति ॥ आत्मेतिद्वितीयार्थे । आत्मानंशरीरिणंइंद्रियमनोयुक्तंतन्मात्रयुक्तंबुद्धिशून्यंदुःखभोक्तेत्याहुर्मनीषिणः । यद्वात्रबुद्धिरपिग्राह्या । तथाचप्रसिद्धरथिवत्सुखभोक्तेत्याहुरितिव्याख्येयं ॥ ४ ॥ इदानीमश्वस्थानीयेंद्रियनियमनंकार्यमि तिभावेनमनोनियमनंविज्ञानंचतत्साधनमित्यन्वयव्यतिरेकाभ्यामाह ॥**यस्त्विति**॥ यस्तुअविज्ञानवान् । शास्त्रादिजनितविशेषबु द्ध्याख्यविवेकिसारथिशून्योऽतएवायुक्तेनानिगृहीतेनमनसासदायुक्तोभवति तस्यपुरुषस्येंद्रियाण्यवश्यानिभवंति । तत्रदृष्टां तमाह ॥ **दुष्टाश्वाइति** ॥ अनिगृहीताश्वाइत्यर्थः ॥ ५॥ प्राधान्याद्व्यतिरेकमुक्त्वान्वयमाह ॥ **यस्त्विति** ॥ ६ ॥ अस्त्वेवम न्वयव्यतिरेकाभ्यांइंद्रियनियमनेमनोनियमनादिसाधनं । तदेवकिमर्थमितिचेन्न । तस्यपरंपरयामोक्षोपयोगित्वादितिभावेनें

---

बुद्धिंतुसारथिंविद्धिमनःप्रग्रहमेवच ॥ ३ ॥ इंद्रियाणिहयानाहुर्विषयांस्तेषुगोचरान् । आत्मेंद्रियमनोयुक्तंभोक्तेत्याहुर्मनीषिणः ॥ ४ ॥ यस्त्व विज्ञानवान्भवत्ययुक्तेनमनसासदा । तस्येंद्रियाण्यवश्यानिदुष्टाश्वाइवसारथेः ॥ ५ ॥ यस्तुविज्ञानवान्भवतियुक्तेनमनसासदा । तस्येंद्रिया णिवश्यानिसदश्वाइवसारथेः ॥ ६ ॥

द्रियनियमनाद्यभावेमोक्षाभावंतावदाह ॥ **यस्त्विति** ॥ अमनस्कोऽगृहीतमनस्कः । अतएवेंद्रियाणांदुष्टविषयेषुयथेष्टंप्रवृत्त्या निरंतरमशुचिः ॥ ७ ॥ इदानीमन्वयमाह ॥ **यस्त्विति** ॥ यस्मात्यत्पदंप्राप्य ॥ ८ ॥ तदेवविवृणोति ॥ **विज्ञानेति** ॥ अध्वनःसंसाराध्वनः ॥ ९ ॥ भगवज्ज्ञानंतारतम्यांतगत्वेनसंपाद्यमितिभावेनदेवतातारतम्यमाह ॥ **इंद्रियेभ्यइति** ॥ इंद्रियेभ्यः श्रोत्रादींद्रियाद्यभिमानिदेवेभ्यःइंद्रादिभ्योऽर्थाःअर्थाभिमानिदेवताःसौपर्णीवारुण्युमाचपराउत्तमाः । अर्थेभ्यश्च परंमनः मनोभिमानिदेवतारुद्रादयउत्तमाः । मनसस्तुपराबुद्धिस्तदभिमानिनीसरस्वती । बुद्धेर्महानात्मा । महत्तत्वाभिमानीब्रह्मापरः ॥ १० ॥ महतःपरमव्यक्तं तदभिमानिश्रीतत्वं । अव्यक्तात्पुरुषःपूर्णषड्गुणोभगवान्परः । पुरुषादप्युत्तममस्तिकिमित्यतआह ॥ **पुरुषान्नपरमिति** ॥ पुरुषात्किमपिपरंन । यतःसाकाष्ठा सएवावधिः । कुतःसापरागतिः गम्यतइति गतिः ॥ ११ ॥ सुकृतस्यलोकइतिभगवतःशरीरस्थत्वमुक्तं। तर्हिजीववत्कुतोनदृश्यतइतिचेन्न । किंसर्वेषांदर्शनमापाद्यते उ

उप० । यस्त्वविज्ञानवान्भवत्यमनस्कस्सदाऽशुचिः । नसतत्पदमाप्नोतिसंसारंचाधिगच्छति ॥७॥ यस्तुविज्ञानवान्भवतिसमनस्कस्सदाशुचिः । सतुतत्पदमाप्नोतियस्माद्भूयोनजायते ॥ ८ ॥ विज्ञानसारथिर्यस्तुमनःप्रग्रहवान्नरः । सोध्वनःपारमाप्नोतितद्विष्णोःपरमंपदं ॥ ९ ॥ इंद्रियेभ्यःपराह्यर्थाअर्थेभ्यश्चपरंमनः । मनसस्तुपराबुद्धिर्बुद्धेरात्मामहान्परः ॥ १० ॥ महतःपरमव्यक्तमव्यक्तात्पुरुषःपरः । पुरुषान्नपरंकिंचित्साकाष्ठासापरागतिः ॥ ११ ॥

तयोग्यानामेव । आद्यआह ॥ एषइति ॥ द्वितीयेत्वाह ॥ दृश्यतइति ॥ अग्र्यत्वमेवविशदयतिसूक्ष्मयेति । सूक्ष्मवस्तुविषयया ॥ १२ ॥ इंद्रियादिदेवेभ्यअर्थादिदेवाउत्तमत्वेनध्येयाइत्युक्तं । नकेवलमुत्तमत्वेनकिंतुपूर्वपूर्वेषांउत्तरोत्तरनियतत्वंच ध्येयमित्याह ॥यच्छेदिति॥ इंद्रियाभिमानिदेवान्वाचिवागभिमानिदेवतासुउमादिषुयच्छेदितिग्राह्यं । वाक्वाचंवागभिमानिनीं मनसिमनोभिमानिनिरुद्रादौयच्छेत् । तद्यच्छेत् ततमनोभिमानिरुद्रादिकं ज्ञानआत्मनिज्ञानाभिमानिन्यांसरस्वत्यांयच्छेत् । ज्ञानंज्ञानाभिमानिनींसरस्वतीं महत्यात्मनि महदभिमानिनि ब्रह्मवाय्वोर्नियच्छेत् । महांतंचाव्यक्तेश्रीतत्वेनियच्छेत् । इति ग्राह्यं । ततअव्यक्तंश्रीतत्वं शांतेपरमानंदेआत्मनिपरमात्मनिनियच्छेत्इत्यर्थः ॥ १३ ॥ वेदपुरुषःस्वयंसाधूनांहितमुपदिशति ॥ उत्तिष्ठतेति ॥ हेअधिकारिणःसंसारएवनिषण्णायूयमुत्तिष्ठतअविद्यासुप्ताश्चजागृत कथंजागरणं वरान्उत्तमाचार्यान्प्राप्यनिबोधत । भगवत्स्वरूपमितिशेषः । किमर्थंभगवद्बोधःसंपादनीयः संसारनिवृत्तेःकारणांतरेणापिसंभवादित्यतआह ॥ क्षुरस्येति ॥ इयंसंसृतिःक्षुरस्यधारेवनिशिता अतएवदुरत्यया ज्ञानंविनाअत्येतुमशक्या । ततृतस्मात्पथःपंथानंमोक्षमार्गंदुर्गंज्ञानंविनागंतुमशक्यमितिकवयोवदंति । भगवज्ज्ञानस्यापिप्रत्यक्षादिनापिसंभवात्किमाचार्योपदेशेनेत्यतआह दुर्गमिति। तंपंथानंसुखहेतुप्राप्तिमंतं । तत्प्राप्तेःसुखहेतुत्वात्पंथाइतिहरिःस्मृतइतिवचनात्दुर्गं आचार्योपदेशमंतरेणज्ञातुमशक्य

उप० । एषसर्वेषुभूतेषुगूढोत्मानप्रकाशते । दृश्यतेत्वग्र्ययाबुद्ध्यासूक्ष्मयासूक्ष्मदर्शिभिः ॥१२॥ यच्छेद्वाङ्मनसीप्राज्ञस्तद्यच्छेज्ज्ञानआत्मनि । ज्ञानमात्मनिमहतितद्यच्छेच्छांतआत्मनि ॥ १३ ॥ उत्तिष्ठतजाग्रतप्राप्यवरान्निबोधत । क्षुरस्यधारानिशितादुरत्ययादुर्गंपथस्तत्कवयोवदंति ॥१४॥

मितिकवयोवदंति ॥१४॥ कुतः शब्दाद्यनात्मकत्वेन श्रोत्राद्यविषयत्वात्इत्याह ॥ **अशब्दमिति** ॥ यद्वादुर्गमत्वमुपपादयि तुंतस्येतरवैलक्षण्यंवदन्नाचार्योपदेशेनभगवन्निश्चयएवमोक्षसाधनमित्याह ॥ **अशब्दमिति** ॥ शब्दोनभवतीत्यशब्दमित्यादि नापंचतन्मात्रावैलक्षण्यमुच्यते । अगंधमित्यपिग्राह्यं । अगंधमित्यनेनोपलक्षणयापंचमहाभूतवैलक्षण्यं । तत्रहेतुरव्ययमिति । यद्वानविद्यतेशब्दोयस्यतदशब्दमित्यादिनाशब्दादिगुणशून्यत्वमुच्यते । अशब्दमितिशब्दाविषयत्वंच । यच्छब्दस्यतमित्युत्तरे णान्वयः । नविद्यतेआदिरुत्पत्तिःपराधीनप्राप्त्यादिलक्षणायस्यसोनादिः । नविद्यतेंतःपरिच्छेदोदेशतःकालतोगुणतोवायस्यसो नंतः । अनादिश्चासावनंतश्चअनाद्यनंतःतं महतश्चतुर्मुखात्परंतंविष्णुंनिचाय्याचार्योपदेशेननिश्चित्यमृत्युमुखात्प्रमुच्यते॥१५॥ वेदपुरुषःपूर्वोक्तांविद्यांस्तौति ॥ **नाचिकेतमिति** ॥ सनातनंअनादिकालतइत्थमेवागतं । श्रुत्वाउक्त्वाचेतियोज्यं ॥ १६ ॥ देशकालविशेषेस्तोत्रवदेतद्विद्यापठितुरानंत्यंफलं । किमुश्रुत्वाव्याख्यातुरुक्तंफलमितिभावेनाह ॥ **यइति** ॥ तत्श्रावणं । श्रा द्धंवा । सर्वाध्यायार्थविधारणार्थोध्यायांतेद्विरुक्तिः ॥ १७ ॥ **इतिप्रथमोऽध्यायः** ॥ १ ॥ ३ ॥

उप० । अशब्दमस्पर्शमरूपमव्ययंतथारसंनित्यमगंधवच्चयत् । अनाद्यनंतंमहतःपरंध्रुवंनिचाय्यतंमृत्युमुखात्प्रमुच्यते ॥ १५ ॥ नाचिकेतमुपा ख्यानंमृत्युप्रोक्तंसनातनं । उक्त्वाश्रुत्वाचमेधावीब्रह्मलोकेमहीयते ॥ १६ ॥ यइदंपरमंगुह्यंश्रावयेद्ब्रह्मसंसदि । प्रयतःश्राद्धकालेवातदानंत्यायक ल्पतेतदानंत्यायकल्पतइति ॥ ३ ॥ इतिप्रथमोऽध्यायः ॥ १ ॥

॥ हरिः ॐ ॥ ब्रह्मविद्याधिकारवैराग्यनिरूपणपूर्वंब्रह्मस्वरूपंप्रपंचेनाहानेनाध्यायेन । परांचिखानिव्यतृणादित्यत्र व्यतृणादित्यस्यहिंसितवान् हननंकृतवानितिव्याख्यानमसदितिभावेनधातुंपठति ॥ तृण्विति ॥ धातुर्धातुव्याख्यानमित्यर्थः । कात्करणंनामकुत्सितत्वेनकरणं । तृणुधातोर्हननार्थत्वस्याश्रुतत्वादितिभावः । मायावादिनोह्यस्मिन्नध्यायेजीवेशाभेदएवप्रतिपाद्यते । यइदंमध्वदंवेदात्मानंजीवमितिसामानाधिकरण्यात् । यदेवेहतदमुत्रेत्यादेश्चेतिवदंति । तदसत् । हंततइदंप्रवक्ष्यामिगुह्यंब्रह्मसनातनं । यथामरणंप्राप्यआत्माभवतिगोतमेत्युत्तरत्रजीवेशभेदस्यैवोक्तत्वेनतद्विरोधादितिभावेनतद्वाक्यमन्यथाप्रतीतिनिरासायव्याचष्टे ॥ इदमिति ॥ स्वप्नांतंचेत्यतःपूर्वंहंततइदंप्रवक्ष्यामीतिप्रतिज्ञावाक्यंद्रष्टव्यमितिभावेनतद्वाक्यव्याख्यानमत्रक्रियतइत्यप्याहुः । जीवोमरणंप्राप्ययथाभवतितच्चेतिसंबंधः । यद्यपिपूर्वं गुह्यंतत्परमंब्रह्मम्रियमाणंशरीरिणंसंप्राप्तमपीतिमरणशब्दंम्रियमाणपरमंगीकृत्यायंमंत्रोभगवत्परतयैवव्याख्यातः । तथापिव्याख्यानांतरमेतदित्यविरोधः । नन्विदंगुह्यंप्रवक्ष्यामीतिप्रतिज्ञाऽसंगता । ब्रह्मस्वरूपस्यनचिकेतसाऽपृष्टत्वात् । जीवोमरणंप्राप्ययथाभवतितच्चप्रवक्ष्यामीतिप्रतिज्ञात्वसंगतैव । नचिकेतसाजीवस्वरूपस्यापृष्टत्वात्इत्यतआह ॥ जीवेश्वरेति ॥ जीवेश्वरभेदज्ञापनंचजीवेश्वरस्वरूपकथनंविनानभवतीतिभावः । ननुयद्यत्रजीवेश्वरभेदज्ञापनायजीवेश्वरस्वरूपनिरूपणंप्रतिज्ञातंस्यात्तर्ह्युत्तरत्रविरुद्धधर्मवत्तयातदुभयोक्तिःस्यादित्यतोस्त्येवतथातदुभयोक्तिः । योनिमन्येप्रपद्यंतेशरीरत्वायदेहिनः । स्थाणुमन्येनुसंयंतियथाकर्मयथाश्रुतं । यएषुसुप्तेषु

---

भाष्यं ॥ तृणुकात्करणइतिधातुः । इदंगुह्यंब्रह्मप्रवक्ष्यामि । यथामरणंप्राप्यजीवोभवतितच्चप्रवक्ष्यामिजीवेश्वरभेदज्ञापनाय ।

जागर्तिकामंकामंपुरुषोनिर्ममाणस्तदेवशुक्रंतद्ब्रह्मेतिजीवेश्वरयोस्तथोक्तत्वादितिभावेनतद्वाक्यंव्याचष्टे ॥ यइति ॥ कर्मफलभोक्तेत्यनेनयोनिमन्यइत्यादिकंव्याख्यातं । सुप्त्यादिमानित्यादिपदेनशोकमरणादिपरिग्रहः । जागर्तीत्यनंतरंयःशोकराहित्याच्छुक्रः यश्चनित्यामृतोयश्चसर्वलोकाश्रयोयंचकोंपिनात्येतीतिग्राह्यं । तेनसुप्त्यादीत्यादिपदोपपत्तिः । जीवेषुसुप्तेषुयोजागर्तिसविष्णुरितिनयुक्तं । देवदत्तेसुप्तेपियज्ञदत्तस्यजागरणदर्शनेनतस्यविष्णुलिंगत्वासंभवादित्यतउक्तंप्रलयादिष्विति । आदिपदेनसृष्टिस्थितिकालग्रहणं । नन्वेतदयुक्तं । तथासतिकामंकामंनिर्ममाणइत्यस्यानुपपत्तिः । नचप्रलयेनिर्माणमस्ति । नचनिर्माणमात्रमत्रोच्यते । नतुतत्कालीनमितिवाच्यं । भुंजानोनोत्सृजेद्वाचमित्यादाविवप्रकरणप्राप्तत्वादित्युक्तत्वात् । अतएवसूत्रकारोपिनिर्मातारंचैकइतिस्वाप्नपदार्थनिर्मातृत्वमीश्वरस्यैतच्छ्रुत्यवष्टंभेनोक्तवानितिचेत्न । प्रलयेपिब्रह्मादिजीवमनोवृत्त्यादिनिर्माणस्यसत्वात्कथमन्यथातन्मनोवृत्तेःप्रवाहतोनादित्वं । उक्तंच प्रलयेपिप्रतिभातपरावरइति । उक्तंचतत्वप्रकाशिकायां । स्वरूपातिरिक्तज्ञाननित्यत्वाभिप्रायेणेति । सूत्रकृतेश्वरस्यस्वाप्नपदार्थनिर्मातृत्वेएतच्छ्रुतेरुपपादनादत्रचभाष्येप्रलयादिष्वित्युक्तत्वात्संस्कारादेःसत्त्वाच्चप्रलयेपिस्वाप्नपदार्थनिर्माणमस्तीत्यप्याहुः । ननुप्रलयेयदिब्रह्मादिमनोवृत्तिनिर्माणंतर्हिकथंतेषांसुप्तिः।नचब्रह्मादिव्यतिरिक्तानामेवसुप्तिरितिवाच्यं । सुषुप्तिसंस्थान्ब्रह्मादिकान् । सुप्तास्तत्रयतोजीवाःसर्वेब्रह्मशिवादिकाइत्यन्यत्रोक्तेरितिचेन्न । यतस्तेषांसावस्थाअस्मत्स्वप्नावस्थासदृशी । मनोवृत्तेस्सद्भावात् । बहिर्व्यापाराभावाच्च । एवंचस्वप्नसुषुप्त्युभयसाधारणसु ॥ ३२ ॥

भाष्यं ॥ यःकर्मफलभोक्तासुप्त्यादिमान्सजीवः । यःप्रलयादिषुजीवेषुसुप्तेषुजागर्तिसविष्णुःपरंब्रह्मेत्यर्थः ।

प्तिशब्दस्यतत्रगौण्यावृत्त्याप्रयोगइति । उक्तंचबृहदारण्यकभाष्ये । स्वप्नसुषुप्त्युभयाभिप्रायेणकानिसुप्तइत्युक्तमिति । उक्तंचषट्प्रश्नभाष्यटीकायां । स्वापोपिद्विविधःस्वप्नःसुषुप्तिश्चेतीति । ननुजीवःसुप्तिशोकादिमान् विष्णुस्तुतेषुसुप्तेषुजागर्तिशोकादिरहितश्चेत्यस्तुतयोर्भेदः । जीवस्यकर्मफलभोक्तृत्वेनकथंतयोर्भेदसिद्धिः । विष्णोरपिकर्मफलभोक्तृत्वांगीकारादितिचेत् । न । यतोत्रकर्मफलंश्रुत्युक्तंजीवस्ययोन्यादिगमनमेवविवक्षितं । नहिजीवस्ययत्योन्यादिगमनंतत्ब्रह्मप्राप्नोति । अतस्तयोर्भेदःसिद्धइतिभावेनाह ॥ नहीति ॥ प्राप्नोतीतिशेषः। यद्यपिजीवनियामकतयायोन्यादिगमनमपिप्राप्नोत्येवब्रह्म तथापिनस्वकर्मार्जितशरीरप्राप्त्यर्थं अतएवश्रुतौशरीरत्वायेत्युक्तमितिभावः । ननुहंततइदंप्रवक्ष्यामीत्यत्रेदंगुह्यंब्रह्मप्रवक्ष्यामि । यथामरणंप्राप्यजीवोभवतितच्चप्रवक्ष्यामीतिप्रतिज्ञाद्वयंकृत्वातदुभयंपश्चादभिधीयतइतिकुतोंगीकर्त्तव्यं । ब्रह्मप्रवक्ष्यामीतिप्रतिज्ञायपश्चात्तन्निरूपणमेवक्रियतइत्यर्थःकिंनस्यात् । नचैवंयथामरणंप्राप्येत्येतद्व्यर्थंस्यादितिवाच्यं । आत्मामरणंप्राप्ययथाभवतितदिदंब्रह्मप्रवक्ष्यामीतिवाक्ययोजनोपपत्तेः । संभवत्येकवाक्यत्वेवाक्यभेदायोगाच्चेतिचेन्न । तथासति योनिमन्येप्रपद्यंतइत्यादिनाजीवस्ययोन्यादिगमनमुच्यमानमसंगतंस्यात् । नचजीवस्ययोन्यादिगमनमपिब्रह्मतयोच्यतइतिनासंगतिरितियुक्तमित्याह ॥ नहीति ॥ योन्यादिगमनस्यब्रह्मत्वेतस्यानित्यत्वप्रसंगइत्यर्थइत्यप्याहुः । नन्वेवंप्रतिज्ञाद्वयमित्यंगीकारेजीवस्वरूपकथनंव्यर्थं । तस्याजिज्ञासितत्वात् । नचजीवेश्वरभेदज्ञापनायतत्कथनमित्युक्तमितिवाच्यं । जीवेश्वरभेदस्याप्यजिज्ञासितत्वेनतज्ज्ञापनस्यापिव्यर्थ

भाष्यं । नहिजीवस्ययोन्यादिगमनंब्रह्म ।

त्वादित्यतआह ॥ जीवादिति ॥ ब्रह्मणोयथावज्ज्ञानंचनचिकेतसाप्रार्थितमितिभावः । नन्वेवंतर्हियइदंमध्वदंवेदात्मानंजीवमंतिकादितिवाक्यविरोधः । तत्रसामानाधिकरण्यव्यपदेशेनजीवेशाभेदप्रतीतेरित्यतस्तद्व्याचष्टे ॥ जीवस्येति ॥ अनेनजीवमितिद्वितीयाषष्ठ्यर्था । अंतिकादितिपंचमीसप्तम्यर्थेत्युक्तंभवति । ननुजीवमितिद्वितीयाकुतःषष्ठ्यर्थत्वेनव्याख्येया । आत्मानंजीवंस्वांतिकेवेदेतियथाश्रुतार्थेबाधकाभावादित्यतआह ॥ नहीति ॥ स्वयंजीवःस्वस्यांतिकेहियस्मान्नभवेत्तस्माज्जीवस्यांतिकइतिव्याख्येयमित्यर्थः । स्वयंजीवःस्वांतिकेकुतोनभवतीत्यत स्तस्यभेदसापेक्षत्वादित्याह ॥ वस्त्वंतरस्येति ॥ हियस्मात्वस्त्वंतरस्यवस्त्वंतरात्दूरत्वमंतिकत्वंवा।नतुतस्यैवतस्मादेव। अतोजीवःस्वयंस्वस्यांतिकेनभवतीत्यर्थः। यःपूर्वंतपसोजातमितिमंत्रस्ययोमुमुक्षुःपूर्वंतपसोज्ञानरूपात्ब्रह्मणोजातंहिरण्यगर्भं किमपेक्षयापूर्वमित्यतआह । अद्भ्यःपूर्वमजायतेति । यःअद्भ्यःभूतेभ्यःपूर्वमजायत। तंप्रथमजंसर्वप्राणिहृदयगुहांप्रविश्यतिष्ठंतंभूतेभिर्भूतैःसहतिष्ठंतंयःपश्यति एतद्वैतदितिव्याख्यानमसत्। एतद्वैतदितिवचनानुसारेणयःपूर्वमितियच्छब्दस्यविष्णुपरत्वेनमुमुक्षुपरत्वाभावात् । नहिनचिकेतसामुमुक्षुस्वरूपंपृष्टं । तपश्शब्दस्यपरब्रह्मपरत्वेएकस्यपूर्वमित्यस्यव्यर्थत्वाच्च । अद्भ्यःपूर्वइत्येतावतापूर्तेः। अद्भ्यःपूर्वंजातमित्यन्वयोपपत्त्याऽजायतेत्यस्यव्यर्थत्वात्अयुक्तत्वाच्च । यच्छब्दाध्याहारेणयोजनायांसएवदोषः। गुहाप्रविष्टत्वस्यविष्णुलिंगत्वस्योक्तत्वेनचतुर्मुखविशेषणत्वायोगाच्च । भूतानांहृदयेअवस्थानाभावेनतैःसहतिष्ठंतमित्युक्त्ययोगाच्च । पूर्वमेकस्ययच्छब्दस्यविद्यमानत्वनेयोभूतेभिरितियच्छब्दस्यव्यर्थत्वात्

भाष्यं ॥ जीवाद्भेदेनज्ञातंहिब्रह्मयथावज्ज्ञातंभवति । जीवस्यांतिके । नहिस्वस्यस्वयंजीवोंतिकेभवति । वस्त्वंतरस्यहिदूरत्वमंतिकत्वंवा ।

प्रमाणविरोधाच्चेतिभावेनवाक्यभेदमंगीकृत्यप्रमाणेनमंत्रंव्याचष्टे ॥ **अन्नामभ्यइति** ॥ ननुभूतानामन्नामकत्वंकथं । अन्नाम्नो भूतविशेषणवाचकत्वादितिचेत् न । पंचीकरणपक्षेभूतविशेषस्यापिसर्वभूतात्मकत्वेनान्नाम्नः सर्वभूतवाचकत्वात् । तर्हिअप् शब्दप्रयोगःकथमितिचेत् न । पार्थिवादिशरीरेषुअपांभूयस्त्वात् । यद्वाएतत्प्रमाणबलादेवान्नाम्नःसर्वभूतवाचकत्वंज्ञायते । भूतेभ्यःतदभिमानिभ्यः । शिवादपिअहंकारतत्वाभिमानिनः । अजायतेत्यस्यार्थोजनयामासेति । पूर्वाजातमित्युक्त्यानास्मत्पक्षेपूर्वशब्दस्यवैयर्थ्यमित्युक्तंभवति । चतुर्मुखमितिविशेष्योक्तिः । गुहांप्रविश्येत्येतत्चतुर्मुखपरमितिप्रतीतिनिरासायव्याचष्टे ॥ **स्वात्मानंचेति** ॥ अभिभवतिसर्वानित्यभिभूः । सर्वभूतैःसहपश्यतीत्यन्वयः । एतद्वैतदित्यस्यार्थमाह ॥ **सएषइति** ॥ तथाचजीवमंतिकादित्युक्तजीवसमीपस्थभगवत्स्वरूपप्रतिपादनायायंमंत्रःप्रवृत्तइतिभावः । नन्वेवंव्याख्यानेपिपूर्वमजातमितिविशेषणंव्यर्थं । व्यावर्त्याभावात् । नहिकश्चित्पूर्वंजातःपुनर्जायते । येनतत्सार्थकंस्यात् यःपूर्वमजातंचतुर्मुखंतपसोद्भ्यःपूर्वमजायतेत्यनन्वयश्चेत्यतआह ॥ **यथेति** ॥ इत्यादिनावाक्येनजाताः भगवन्मुखादिनाजातत्वेनावगताइत्यर्थः । नतथाभगवतोब्रह्मापूर्वंजातएवजायते । ननुहिरण्यगर्भस्याद्भ्यःपूर्वंजननांगीकारेअद्भ्यःसंभूतोहि

---

भाष्यं ॥ अन्नामभ्यश्चभूतेभ्यस्तपोनाम्नःशिवादपि । पूर्वंयोजनयामासपूर्वाजातंचतुर्मुखं । स्वात्मानंचगुहासंस्थंसर्वभूतैस्सहाभिभूः । यःपश्यतिसदाविष्णुस्सएषहृदिसंस्थितइतिच । यथामुखादिंद्रश्चाग्निश्चेत्यादिनाजाताएवेंद्रादयःकश्यपात्पुनर्जायंते नतथाभगवतोब्रह्मा । किंतु जातमेवाभ्यःपूर्वमजायतजनयामास ।

रण्यगर्भइतिश्रुतिविरोधइतिचेत् । न । तद्वाक्यस्यब्रह्मांडांतःसृष्टिपरत्वात् । अस्यबाह्यसृष्ट्यपेक्षत्वादिति । अजायतेत्यस्यस्वय मुत्पन्नइत्यर्थत्वात्कथंजनयामासेतिव्याख्यानमित्यतोंतर्णीतणिच्त्वान्नानुपपत्तिरितिप्रयोगपूर्वमाह ॥ अजायतेति ॥ याप्रा णेनसंविशतीतिमंत्रःप्रसिद्धादितिपरइत्यनुपपन्नं । पितृसौमनस्यस्वर्ग्याग्निपरात्मनांत्रयाणामेवनचिकेतसापृष्टत्वेनादितिकथन स्यासंगतत्वात् । अतोविष्णुपरएवायंमंत्रः । नन्वेतदप्ययुक्तं । अदितिशब्दस्यदेवमातरिरूढत्वेनविष्णौस्त्रीलिंगांतादितिशब्दप्रयो गायोगात् । देवतामयीत्युक्तदेवतास्वरूपत्वायोगात् । प्राणेनप्राणस्वरूपेणेत्युक्तमुख्यप्राणस्वरूपत्वस्यासंभवाच्च । किंचगुहांप्र विश्यतिष्ठंतीमित्युक्तोगुहासंस्थःकिंविष्णुरन्योवा । नाद्यः । तस्ययाभूतेभिर्व्यजायतेतिउक्तभूतजन्यत्वासंभवात् । नद्वितीयः । प्रागुक्तविरोधादित्यतस्तंमंत्रंप्रमाणेनव्याचष्टे ॥ अदनादित्यादिना ॥ अदनाददितिरित्यनेनादितिशब्दोयोगेनविष्णुपरइत्युक्तं भवति । नचस्त्रीलिंगानुपपत्तिः । भगवतःस्त्रीरूपत्वस्यापिभावात् । ननुस्मृतौउत्तमोदेवताभ्यश्चेत्येतत्कस्यव्याख्यानमितिनप्र तीयतइत्यतोदेवतामयीतिपदव्याख्यानमितिभावेनतदनूद्यव्याचष्टे ॥ देवतेति ॥ मयटःप्राधान्यार्थकत्वादितिभावः । इदंच प्रसिद्धादितिपरत्वेनुपपन्नं । नचानेनदेवतास्वरूपत्वमुच्यतइतिवाच्यं । विशिष्टेविशिष्टाभेदस्यबाधात् । चैतन्यैक्यविवक्षायाम 

---

भाष्यं ॥ अजायतेति जज्ञेबहुज्ञमितिवदंतर्णीतणिच् । अदनाददितिर्विष्णुर्यःप्राणसहितःस्थितः । उत्तमोदेवताभ्यश्चसोत्मानंविविधात्मना । मत्स्यकूर्मादिरूपेणगुहासंस्थमजीजनत् । भूतैस्सहमहाविष्णुःपरमात्मायुगेयुगइतिच । देवतामयीदेवतोत्तमा ।

दितिदेवताशब्दयोर्लाक्षणिकत्वापातात् । ननुप्राणेनसंविशतीत्यस्यप्राणसहितःस्थितइतिकथमर्थस्ततस्तस्याप्रतीतेरित्यतःप्राणेनसंविशतीत्येतद्व्याचष्टे ॥ प्राणेनेति ॥ सहयोगेतृतीयेतिभावेनसहितइत्युक्तं । अनेनप्राणरूपेणेतिव्याख्यानमपास्तं । आदितेःप्राणस्वरूपत्वस्यतेनाप्यनंगीकारात् । चैतन्यैक्यस्याप्रामाणिकत्वात् । संविशतीत्यस्यार्थःस्थितोभवतीति । ननुमत्स्यकूर्मादिरूपेणगुहासंस्थमजीजनदितिअनुपपन्नं । मत्स्यकूर्मादिरूपस्यबहिष्ठत्वेनगुहासंस्थत्वाभावादित्यतोगुहांप्रविश्येतिवाक्यंव्याचष्टे ॥ गुहामिति ॥ स्वात्मानमितिविशेष्याध्याहरः । भूतैःसहेत्युक्त्याभूतेभिरितितृतीयानहेत्वर्थेत्युक्तंभवति । विविधं मत्स्यकूर्मादिरूपेण । तथाचस्मृतौगुहासंस्थमित्येतत् आत्मानमित्यस्यविशेषणमितिनानुपपत्तिरितिभावः । अरण्योर्निहितोजातवेदाइतिमंत्रःप्रसिद्धाग्निपरइत्यसत् । तत्कथनस्यासंगतत्वादितिभावेनतंमंत्रंविष्णुपरतयाप्रमाणेनव्याचष्टे ॥ सर्वज्ञइति ॥ जातवेदाइत्यस्यार्थःसर्वज्ञइति । जातंवेत्तीतिजातवेदाः । अरण्योरित्यनुवादेनगुरुशिष्ययोरितिव्याख्यानं । निहितइत्यस्यार्थःसुभृतइति । जागृवद्भिरीड्यइत्यस्यार्थोजानद्भिःस्तूयतइति । नचैवंसत्यग्निशब्दानुपपत्तिः । तस्यप्रागेवभगवत्परतयाव्याख्यातत्वात् । गुरुशिष्ययोःकथमरणीशब्दवाच्यत्वमित्यतस्तद्व्युत्पादयति ॥ अर्यतइति । अर्यतेज्ञायतेणआनंदरूपो णश्चनिर्वृतिवाचकइत्युक्तेः बलरूपोवा णकारोबलमितिश्रुतेः । मायावादिनस्तुयदेवेत्यादिकमेवव्याचक्षते । ब्रह्मादिस्थावरांतेषुवर्त्तमानंतत्तदु

---

भाष्यं ॥ प्राणेनसहितोभवति । गुहांप्रविश्यतिष्ठंतंस्वात्मानंभूतैस्सहविविधंजनयामास । सर्वज्ञोभगवान्विष्णुररण्योर्गुरुशिष्ययोः । सुभृतःस्तूयतेनित्यंजानद्भिःपुरुषोत्तमइतिच । अर्यतेणआभ्यामित्यरणी ।

पाधिवशादब्रह्मवदवभासमानंसंसारि । परस्मात्ब्रह्मणोन्यदितिशंकापरिहारार्थमाह ॥ यदेवेति ॥ यदेवेहकार्यकारणोपाधिसमन्वितंसंसारधर्मवद वभासमानंस्वात्मस्थं तदमुत्रनित्यंविज्ञानघनस्वभावं संसारधर्मवर्जितंब्रह्म यच्चामुत्रामुष्मिन्नात्मनिस्थितंतदेवेहनामरूपकार्यकारणोपाधिमनुभाव्यमानंनान्यत् । तत्रैवंसत्यविद्ययामोहितःसन्यइहब्रह्मण्यनानाभूतेपरस्मादन्योहंमत्तोन्यत्परंब्रह्मेतिनानेवभिन्नमिवपश्यति समृत्योमृत्युंपुनर्जन्ममरणभावमाप्नोति । तस्मात्तथानपश्येत् । विज्ञानैकरसंब्रह्मैवाहमितिपश्येदितिवाक्यार्थः । प्रागेकत्वविज्ञानादाचार्यागमसंस्कृतेनमनसेदंब्रह्माप्तव्यं । आत्मैवास्तिनान्यदस्तीति आप्तेतुनानात्वप्रत्युपस्थापिकायाअविद्यायानिवृत्तत्वादिहब्रह्मणिनानास्ति । किंचनाणुमात्रमपिवस्तु । यइहनानेवपश्यति समृत्योःमृत्युंगच्छत्येव स्वयमपिभेदमध्यारोपयन्नित्यर्थइति । तदसत् । चैतन्यैक्यस्याप्रामाणिकत्वात्प्रमाणविरुद्धत्वाच्चेतिभावेनश्रुतिव्याख्यानरूपंप्रमाणमेवोदाहरति ॥ यइति ॥ अनेनयदेवेहतदमुत्रेत्येतद्व्याख्यातं । प्रादुर्भावगइत्यनेनेहेत्यस्यभूम्यादावित्यर्थोवक्तव्यइतिसूचितं । तस्यैवार्थांतरंदेहादिषुचेति । सएवेत्युक्त्याश्रुतावेवकारोभिन्नक्रमइत्युक्तंभवति । चशब्दोवधारणार्थः । साक्षादित्यनेनसंबंध्यते । यदमुत्रतदनुइहेत्येतत्व्याचष्टे ॥ मूलरूपश्चेति ॥ आद्यश्चशब्दःप्रकृतत्वानुसंधानार्थः । द्वितीयोवधारणार्थः । सइत्यनेनसंबध्यते । नन्ववतारादिरूपस्यमूलरूपाभेदेमूलरूपस्यावताराभेदःसिद्धएव । नहियद्येनाभिन्नंतत्तेनभिन्नमितिशंकार्हं । अतोयदमुत्रतदन्विहेत्येतद्व्यर्थमितिचेन्न । तथासतित्वत्पक्षेपिवैयर्थ्यापातात् । संघातस्यचै

भाष्यं । यःप्रादुर्भावगोविष्णुर्देहादिषुचसंस्थितः । सएवमूलरूपश्चसाक्षान्नारायणाभिधः । मूलरूपश्चयोविष्णुःप्रादुर्भावादिगश्चसः ।

तन्यस्यनिर्विशेषचैतन्याभेदेनिर्विशेषचैतन्यस्यापितदभेदस्यसिद्धत्वात् । अस्मत्पक्षेतुइंद्रार्जुनादिवत्सर्वविशेषाभावज्ञापनार्थत्वे नसार्थक्यात् । अतएवात्यल्पविशेषदर्शिनामप्यनर्थःकथ्यते मृत्योःसमृत्युमित्युत्तरवाक्येनेतिभावेनतद्वाक्यंव्याचष्टे ॥ गुणत इति ॥ नानेत्यस्यार्थोविशेषमिति । क्वचिदंतरशब्दश्चविशेषस्यैववाचकइतिनानाशब्दपर्यायांतरशब्दस्यविशेषवाचकत्वस्मरणात् । गुणतःस्वरूपतइत्यस्य योग्यतयासंबंधः । इवशब्दार्थोत्यल्पमिति । अनेनपरमतेइवशब्दोव्यर्थःस्यादित्युक्तंभवति । अपिशब्देनाधिकविशेषदर्शिनस्तमोयांतीतिकिंवक्तव्यमितिसूचयति । मृत्योर्मृत्युमित्यस्यतात्पर्यंतमोंधमिति । पुनर्जन्ममरणभावमात्रस्यमिथ्याज्ञानफलत्वायोगात् । एवंयदेवेहेत्यनेनावतारादिरूपस्यमूलरूपस्यचविशेषशून्यतयाऽत्यंताभेदेभिहिते किमत्यंताभेदेन भेदाभेदःकिंनस्यादित्यतस्तज्ज्ञानिनामनर्थोक्तेरितिभावेनभेदाभेदज्ञानिनामनर्थोक्तिपरतयापिमृत्योःसमृत्युमितिवाक्यंव्याचष्टे ॥ भेदेति ॥ नानेवेत्यस्यार्थोभेदाभेदेति । अत्रावतारमूलरूपयोः ॥ १० ॥ इदानींमृत्योःसमृत्युंगच्छतीतिवाक्यंव्याचष्टे ॥ तथैवेति ॥ यथास्वरूपेषुभेदाभेददर्शिनस्तमःप्राप्तिस्तथैवेत्यर्थः । अनेन नानेवेतिइवशब्दउपमार्थतयापिव्याख्यातः । तेनविष्णुनाएतेषामवयवादीनांभेदविच्चेत्यनेन एवंधर्मान्पृथक्पश्यन्नित्येतदुक्तार्थं । उभयविदःभेदाभेदविदः । एवंनानेवेतीवश

---

भाष्यं० ॥ गुणतस्स्वरूपतोवापिविशेषंयोत्रपश्यति । अत्यल्पमपिमृत्वासतमोंधंयात्यसंशयं । भेदाभेदविदश्चात्रतमोयांतिनसंशयः । तथैवावयवानांचगुणानांचपरस्परं । क्रियाणांतेनचैतेषांभेदविच्चोभयंविदः । यांत्येवांधंतमोनात्रकार्याकाचिद्विचारणेतिच ।

ब्दोऽल्पार्थउपमार्थोभेदाभेदार्थश्चव्याख्यातः । तत्कुतइत्यतःसप्रमाणकंतत्समर्थयते ॥ **भवेदिति** ॥ विरुद्धयोर्धर्मयोःसंयोगे विवक्षिते एकविरोधिवाचकशब्दस्योपरिइवशब्दोभवेदित्यर्थः । उपमायांविवक्षितायांनानेवेतीवशब्दः नानाशब्दशिरःस्थइव शब्दइत्यर्थः । चशब्दादुपमाद्यर्थश्चेतिसमुच्चिनोति । किंचयदेवेहेत्यनेनैवजीवब्रह्मभेदस्यनिषिद्धत्वात्त्वत्पक्षेनेहनानेतिवाक्यंव्य र्थंस्यात् । ननुभवत्पक्षेपिव्यर्थं यदेवेहेत्यनेनात्यंताभेदमुक्त्वातत्रभेदाभेददर्शिनामनर्थोक्त्याभेदनिषेधस्यप्रागेवजातत्वादित्यतः पूर्वोत्तरवाक्यतात्पर्यमाह ॥ **प्रथममिति** ॥ भगवत्स्वरूपाणांमूलरूपावतारादिरूपाणांभेदनिषेधार्थमित्यर्थः । तदवयवादीनां भेदनिषेधोत्रक्रियतइतिकुतः ज्ञापकाभावादित्यतउक्तं किंचनशब्दादिति । किंचनशब्दस्यसर्वनामत्वेनप्रकृतवाचित्वात् । आ सीनोदूरंव्रजतिशयानइत्यादिनावयवानां महांतंविभुमात्मानमित्यादिनागुणानां यःपूर्वंतपसोजातमद्भ्यःपूर्वमजायतेत्यादिनाक र्मणांचप्रकृतत्वादितिभावः ॥ **भेदनिषेधार्थमिति** ॥ इहब्रह्मणि किंचन प्रकृतमवयवादिकं नानाभिन्नंनास्तीत्युक्तेऽवयवादी नांभेदएवनिषिध्यते । सविशेषणेहीतिन्यायात् । लोहितोष्णीषाऋत्विजःप्रचरंति नजीर्णमलवद्वासाःस्नातकःस्यादित्यादौदर्श नाच्च । अन्यथाधर्माणांस्वरूपतएवनिषेधेनानेतिव्यर्थंस्यादितिभावः । ननुयदिनेहनानेतिवाक्यंभगवदवयवादिधर्माणांभेदनि

भाष्यं० ॥ भवेदेकत्रसंयोगइवशब्दोविरुद्धयोः । धर्मयोरुपमायांवास्वल्पत्वेवाविवक्षितइतिशब्दनिर्णये । अतोनानेवेतीवशब्दोल्पविषयो भेदाभेदविषयश्च । प्रथमंयइहनानेवपश्यतीतिस्वरूपभेदनिषेधार्थं । नेहनानास्तिकिंचनेतिकिंचनशब्दादवयवानांगुणानांक्रियाणांचपरस्परंतद्वता चभेदनिषेधार्थं ।

षेधार्थं तर्हिएवंधर्मानितिवाक्यंव्यर्थंस्यात् । तत्राप्यवयवादिधर्माणांभेददर्शिनामनर्थोक्त्यातन्निषेधादित्यतआह ॥ भेदेति ॥ अवयवानामित्यारभ्यतद्वताचेत्यंतमत्रानुवर्तते । मृत्योस्समृत्युंगच्छतीत्यत्रावयवादीनांभेदाभेदएवनिषिध्यते । तद्दर्शिनामेवानर्थोक्तेः । नतुभेदः । तद्दर्शिनामनर्थानुक्तेः । तथाचनेहनानेतिभेदनिषेधप्रतिज्ञानुपपन्नेत्याशंकांनिवर्तयितुमित्यर्थः । एवंधर्मानितिवाक्यस्योक्ततात्पर्यकत्वाप्रतीतेःकथमेतदित्यतोयथोदकमितिदृष्टांतवाक्यव्याख्यानपूर्वकंतद्व्याचष्टे ॥ पर्वतेष्विति ॥ अनेनधर्मदर्शिनामनर्थोक्त्याधर्मनिषेधएवात्राभिप्रेतइत्यसदित्युक्तंभवति । पृथगित्यस्यवैयर्थ्यापातात् । विजानतोमुनेरात्मास्वरूपमेवंब्रह्माभिन्नंभवतीतिनिरासायैवंमुनेर्विजानतआत्माभवतीत्येतद्व्याचष्टे ॥ विजानतइति ॥ आत्मास्वामीत्यर्थः । तादृगेवेत्यनेनदृष्टांतवाक्यस्थंतादृगितिपदंअत्रअनुवर्ततइत्युक्तंभवति । एवकारव्यावर्त्यमाह ॥ नत्विति ॥ वायुरपीत्यध्याहृतापिशब्दसूचितकैमुत्यमाह ॥ किम्वन्यइति ॥ अन्येजीवास्तादृशाएवभवंति । नतुसएवभवंतीतिकिमुवक्तव्यमित्यर्थः । वायोःसंसारितयासादृश्यमात्रप्राप्तावपिमुक्तस्यतदैक्यप्राप्तिःकिंनस्यादित्याशंकांपरिहरन्श्रुतेःस्वकृतंव्याख्यानंप्रमाणेनद्रढयति ॥ सर्वेषामिति ॥ अत्रबहुवचनश्रवणाद्विजानतइत्येकवचनंसमुदायाभिप्रायं । वायुर्ब्रह्मा चशब्दोपिशब्दार्थः । वायोस्तद्रूपत्वा

भाष्यं० ॥ भेदाभेदएवनिषिध्यतेनतुभेदइत्याशंकांनिवारयितुंएवंधर्मान्पृथक्पश्यन्नितिभगवद्धर्माणामवयवगुणकर्मणांभेददर्शनेपृथग्दोषमाह । पर्वतेषुदुर्गेशिखरेवृष्टमधोविधावति । एवंविष्णोश्चधर्मान्पृथक्पश्यन्नंधंतमोविधावति । विजानतोमुनेरात्मावायुरपितादृगेवभवति । नतुसएवभवति । किम्वन्येजीवाः । सर्वेषांज्ञानिनामात्मादेवानांचविशेषतः । मुक्तोवायुश्चसादृश्यमेवविष्णोस्तुगच्छति । नतुतद्रूपतांयातिकिम्वन्येदेवमानुषाः ।

भावेपिअन्येषांतत्किंनस्यादित्यतआह ॥ **आभासेति** ॥ केचनसाक्षादाभासाः केचनाभासाभासाइत्यर्थः ॥ इतिद्वितीयाध्यायस्यप्रथमावल्ली ॥ २ ॥ १ ॥ ओं ॥ स्वयंभूर्ब्रह्मापरांचिपराङ्मुखानिविषयासक्तानि । लोकेंद्रियस्वरूपकथनमेतत् । खानिइंद्रियाणिव्यतृणात् कात्कृतवान् । विषयव्यावृत्तान्यकरोत् । तस्माद्विषयव्यावृत्तेंद्रियत्वात्पराङ्नपश्यति । विषयासक्तोनभवतिकिंत्वंतरात्मनिपश्यति । अंतरात्मन्येवासक्तोभवतीत्यर्थः । यतएवमतःकश्चिद्धीरोअमृतत्वंमोक्षमिच्छन्आवृत्तचक्षुर्विषयव्यावृत्तेंद्रियःसन्प्रत्यगात्मानमंतरात्मानमैक्षत्अपश्यत् पश्येदित्यर्थः ॥ १ ॥ नसर्वथामुमुक्षुर्विषयप्रमादीस्यादितिभावेनोक्तमेवविवृणोति ॥ **पराचइति** ॥ यद्वाविषयव्यावृत्तेंद्रियाणांफलकथनेनतदेवसमर्थयते ॥ **पराचइति** ॥ बालाअविवेकिनःपराचोबहिष्ठान्कामाननुयंति । अतस्तेविततस्यसर्वदेशकालेषुविस्तृतव्यापारस्यमृत्योर्यमस्यपाशंमरणमितियावत्यंतियांति । अथतस्मात्धीराअमृतत्वंमोक्षंध्रुवंनित्यंविदित्वाइहाध्रुवेषुविषयेषुनप्रार्थयंते ॥ २ ॥ एवमुक्तोनचिकेताःस्वयंविषयव्यावृत्तेंद्रियत्वात्पुनरपिजीवनियामकभगवत्स्वरूपंपृच्छति ॥ **येनेति** ॥ येन सर्वेवेदाइत्याद्युक्तमाहात्म्यवता । एतेनैवऋतंपिबंताविव्याद्युक्तमाहात्म्यवताविष्णुनैव । जीवोरूपादिकंविजानाति यच्चात्रमुक्तौपरिशिष्यते तदेतत्किं कैर्विशेषणैर्विशिष्टमित्यर्थः ।

भाष्यं० ॥ आभासाभासरूपास्तुवायोर्देवस्यसर्वशइतिभविष्यत्पर्वणि ॥ २ ॥ १ ॥

ओं । परांचिखानिव्यतृणात्स्वयंभूस्तस्मात्पराक्पश्यतिनांतरात्मन् । कश्चिद्धीरःप्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥ १ ॥ पराचःकामाननुयंतिबालास्तेमृत्योर्यंतिविततस्यपाशं । अथधीराअमृतत्वंविदित्वाध्रुवमध्रुवेष्विहनप्रार्थयंते ॥२॥ येनरूपंरसंगंधंशब्दान्स्पर्शाश्चमैथुनान् ।

परिहारमाह ॥ एतद्वैतदिति ॥ तत्त्वत्पृष्टंजीवनियामकभगवत्स्वरूपंएतद्वक्ष्यमाणविशेषणविशिष्टं वैप्रसिद्धमित्यर्थः ॥ ३ ॥ तदेवाह ॥ स्वप्नांतमिति ॥ अत्रस्वप्नांतशब्दःस्वप्नसुषुप्त्युभयाभिप्रायेण । येनप्रेरितोजीवः । उभौ तस्यैवविवरणं स्वप्नाख्यों तःस्थानंस्वप्नांतःतं । अंतःस्थानंस्थलंवासःप्रदेशइतिचोच्यतइत्यभिधानात् । जागरितांतंच जागरितस्थानंचपश्यति तंमहांतंप रममहत्त्वोपेतं अतएवविभुमात्मानंमत्त्वाधीरोनशोचति ॥ ४ ॥ किंचयइदंइमंमध्वदंसुखभोक्तारं मध्वित्यानंदउद्दिष्टइतिवच नात् । भूतस्यभव्यस्यवर्तमानस्यचेशानमात्मानंभगवंतं जीवमंतिकात्जीवस्यांतिकेवेद सततोभगवज्ज्ञानसामर्थ्येनान्यविषयक भयाभावात्नविजुगुप्सतेआत्मानंगोप्तुंनेच्छति ॥ ५ ॥ जीवस्यांतिकेविद्यमानंहृद्गतंभगवत्स्वरूपंकीदृशमित्याकांक्षायांतत्स्वरूपं वक्तुंपुनःप्रतिजानीते ॥ एतद्वैतदिति ॥ तत्जीवस्यांतिकेविद्यमानंभगत्स्वरूपं एतद्वै यःपूर्वमजातंचतुर्मुखंतपसस्तपोनाम्न श्शिवात्अद्भ्योऽन्नामकभूतेभ्यश्चपूर्वमजायतजनयामास । यश्चहृद्गुहांप्रविश्यतिष्ठंतंस्वात्मानंभूतेभिर्भूतैःसहव्यपश्यतपश्यति । एतच्छब्दस्यपूर्वेणान्वयः ॥ ६ ॥ किंचयादेवतामयीदेवतोत्तमा अदनाददितिःस्त्रीरूपाभगवती प्राणेनमुख्यप्राणेनसहिता सं विशतिदेहादौस्थिताभवति याचगुहांप्रविश्यतिष्ठंतींस्वात्मानंभूतैःसहविविधंमत्स्यकूर्मादिरूपेणाजायतजनयामास । एतद्वैतदि

उप० ॥ एतेनैवविजानातिकिमत्रपरिशिष्यते । एतद्वैतत् ॥ ३ ॥ स्वप्नांतंजागरितांतंचोभौयेनानुपश्यति । महांतंविभुमात्मानंमत्त्वाधीरो नशोचति ॥४॥ यइदंमध्वदंवेदात्मानंजीवमंतिकात् । ईशानंभूतभव्यस्यनततोविजुगुप्सते । एतद्वैतत् ॥५॥ यःपूर्वंतपसोऽजातमद्भ्यःपूर्वमजायत । गुहांप्रविश्यतिष्ठंतंयोभूतेभिर्व्यपश्यत । एतद्वैतत् ॥६॥ याप्राणेनसंविशत्यदितिर्देवतामयी । गुहांप्रविश्यतिष्ठंतींयाभूतेभिर्व्यजायत । एतद्वैतत् ॥ ७ ॥

त्यन्वयः ॥ ७ ॥ किंचजातंवेत्तीतिजातवेदाःसर्वज्ञो गर्भिणीभिर्गर्भोयथासुधितःसुभृतस्तथारण्योरर्यतेणःसुखरूपोबलरूपोवाभगवान्आभ्यामित्यारणीगुरुशिष्यौतयोर्निहितःसुभृतोजागृवद्भिर्जानद्भिर्हविष्मद्भिःपूजासाधनद्रव्यवद्भिश्चमनुष्यैर्दिवेदिवेप्रतिदिनंईड्यःस्तुत्योयोग्निरदनादग्निनामाभगवान् एतद्वैतत् ॥ ८ ॥ किंचसूर्यःसृष्टिकालेयतउदेति यत्रचप्रलयकालेस्तमदर्शनंचगच्छति तंसर्वेदेवाअर्पिताःप्राप्ताःतद्भगवत्स्वरूपंकश्चननात्येत्येव ॥ ९ ॥ गुहांप्रविश्यतिष्ठंतंयोभूतेभिर्व्यपश्यत । गुहांप्रविश्यतिष्ठंतींयाभूतेभिर्व्यजायतेत्यनेनभगवद्रूपाणांभगवतासहभेदप्राप्तावाह ॥ यदेवेति ॥ इहभूम्यादौदेहादौचयद्रूपंवर्तते तदेवामुत्रवैकुंठादावप्यस्ति । अभेदेपिइंद्रार्जुनादाविवज्ञानादौविशेषोनमंतव्यइतिभावेनाह ॥ यदमुत्रेति ॥ यद्रूपंवैकुंठादावस्ति । तदेवभूम्यादावस्ति । नतत्रज्ञानादावत्यल्पोपिविशेषोज्ञेयइतिभावः । कुतोनज्ञेयइत्यतस्तज्ज्ञानिनामनर्थमाह ॥ मृत्योरिति ॥ यइहमूलरूपावताररूपादौनानेवअत्यल्पमपिविशेषंपश्यतिसमृत्योरनंतरंमृत्युंनरकमंधंतमःप्राप्नोति । यदेवेहतदमुत्रेतिभगवद्रूपाणामत्यंताभेदोक्तिरयुक्ता । भेदाभेदस्यापिसंभवादित्यतोभगवत्स्वरूपेषुभेदाभेदनिषेधायतद्दर्शिनांवानर्थमाह ॥ मृत्योरिति ॥ यइहभगवत्स्वरूपेषु । नानेव नानाशब्दोभेदवाची । मुक्तोपसृप्यव्यपदेशादित्यादाविवभावप्रधानत्वात् । इवशब्दस्तुत

उप० ॥ अरण्योर्निहितोजातवेदागर्भइवसु(धि)भृतोगर्भिणीभिः । दिवेदिवईड्योजागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥ ८ ॥ यतश्चोदेति सूर्योस्तंयत्रचगच्छति । तंदेवास्सर्वेअर्पितास्तदुनात्येतिकश्चन । एतद्वैतत् ॥ ९ ॥ यदेवेहतदमुत्रयदमुत्रतदन्विह । मृत्योस्समृत्युमाप्नोतियइहनानेवपश्यति ॥ १० ॥

द्विरुद्धाभेदाभिधायकः । तस्ययद्वाचकशब्दशिर(स्त्वं)स्कत्वं तद्विरुद्धाभिधायकत्वस्वाभाव्यात् । तथाचभेदाभेदंपश्यति । समृत्योर्मृत्युंतमःप्राप्नोति । अतोनतत्रभेदाभेदइत्यर्थः ॥ १० ॥ इदंचस्वमनस्येवस्थापनीयंनान्यस्मैब्रूयादित्याह ॥ **मनसैवेति** ॥ यद्वा तंदेवाःसर्वेअर्पिताइत्युक्तभगवत्प्राप्तिसाधनंकिमित्यतआह ॥ **मनसेति** ॥ श्रवणादिसंस्कृतेनमनसेत्यर्थः । नकेवलंभगवदवतारादीनामेवभगवताभेदाभावः किंनामप्रागुक्तभगवदवयवगुणकर्मादीनामपिपरस्परंभगवताचभेदोनास्तीत्याह ॥ **नेति** ॥ इहब्रह्मणिकिंचनावयवगुणकर्मादिकंपरस्परंभगवताचनानाभिन्नंनास्तीत्यर्थः । इहब्रह्मणिकिंचनावयवादिप्रयुक्तंनानानानात्वं भेदोनास्तीत्यर्थः । ननुकुतएवंभगवदवयवादीनांपरस्परंभगवताचभेदाभावः घटादाविवाभेदेपिभेदःकिंनस्यादित्यतोभेदाभेदज्ञानिनामनर्थमाह ॥ **मृत्योरिति** ॥ इवशब्दउपमायामपिवर्तते । यथाभगवत्स्वरूपेषुभेदाभेदज्ञानीतमःप्राप्नोति तथैवयइहभगवदवयवगुणकर्मादिषुपरस्परंभगवताचनानेवभेदाभेदंपश्यति समृत्योर्मृत्युंतमोगच्छति । अतोनतत्रभेदाभेदइत्यर्थः ॥ ११ ॥ किंचांगुष्ठमात्रोंगुष्ठपरिमाणः । हृद्यवकाशापेक्षयांगुष्ठमात्रत्वोक्तिः । पुरुषःपूर्णषड्गुणआत्मनिमध्यदेहेहृद्गुहायांतिष्ठति । ईशानइत्याद्युक्तार्थं ॥ १२ ॥ धूमानावृताग्निरिवप्रकाशरूपइत्यर्थः । सएवाद्यवर्तते सएवश्वोपिवर्तिष्यते । अनाद्यनंतकालेपिसदावर्ततइत्यर्थः ॥ १३ ॥ ननुमृत्योःसमृत्युंगच्छतीत्यनेनभगवदवयवादीनांभगवतापरस्परंचभेदाभेदएवनिषिध्यते । नतुभेदः ।

उप० ॥ मनसैवेदमाप्तव्यंनेहनानास्तिकिंचन । मृत्योस्समृत्युंगच्छतियइहनानेवपश्यति ॥ ११ ॥ अंगुष्ठमात्रःपुरुषोमध्यआत्मनितिष्ठति । ईशानोभूतभव्यस्यनततोविजुगुप्सते । एतद्वैतत् ॥१२॥ अंगुष्ठमात्रःपुरुषोज्योतिरिवाधूमकः । ईशानोभूतभव्यस्यसएवाद्यसउश्वः । एतद्वैतत् ॥१३॥

तद्दर्शिनामनर्थानुक्तेः । अतोनेहनानेतिकथंभेदाभावउक्तइत्यतोभेददर्शिनामप्यनर्थवक्तुंप्रतिजानीते ॥ यथेति ॥ यथापर्वतेषु दुर्गेशिखरेवृष्टमुदकंअधोविधावति । एवंविष्णोर्धर्मान्पृथक्विष्णुनापरस्परंचभेदेनपश्यन्तानेव पृथग्दृष्टधर्मानेव धर्मपार्थक्य दर्शनानंतरमेवेतियावत् । विधावतिअंधंतमइत्यर्थः ॥ १४ ॥ ननुयथाभगवत्स्वरूपाणांभगवताभेदाभावस्तथामुक्तानामपिभग वताभेदाभावःकिंनेत्याह ॥ यथेति ॥ हेगोतमयथाशुद्धेउदकेआसिक्तंशुद्धमुदकंतादृगेवभवतिनतुतदेव । अन्यथावृद्धिदर्श नासंभवात् । एवंविजानतोमुनेरात्मास्वामीवायुरपिमुक्तःसन्तादृगेवभगवत्सदृशएवभवति । नतुसएव । किमन्येजीवाइत्यर्थः ॥ १५ ॥ द्वितीयाध्यायेप्रथमावल्ली ॥ २ ॥ १ ॥ पुरमेकादशद्वारमित्यस्यैकादशद्वारमिदंशरीराख्यंपुरमवक्रचेतसोऽजस्य ब्रह्मणएव । यस्येदंशरीरंतंपुरस्वामिनंपरमेश्वरंअनुष्ठायध्यात्वानशोचतीतिव्याख्यानमसत् । शरीरस्यजीवाभिमततयाजीवपु रत्वेनब्रह्मपुरत्वाभावात् । जीवब्रह्मैक्यस्यबाधितत्वात् । यस्येदंशरीरंतंपुरस्वामिनमित्यध्याहारप्रसंगाच्च । संभवत्येकवाक्यत्वे वाक्यभेदकल्पनायोगाच्चेतिभावेनतद्वाक्यमितिशब्दाध्याहारेणयथावद्व्याचष्टे ॥ इदमिति ॥ ननुभगवदधीनमित्यस्यार्थस्यश्रु तावदर्शनात्कथमेवंव्याख्यानमित्यतस्तत्प्रदर्शनपूर्वकमनुष्ठायेत्युक्तंविवृणोति ॥ अजस्येति ॥ तथाचाजस्येतिषष्ठ्यर्थएवभग

---

उप० ॥ यथोदकंदुर्गेवृष्टंपर्वतेषुविधावति । एवंधर्मान्पृथक्पश्यंस्तानेवानुविधावति ॥ १४ ॥ यथोदकंशुद्धेशुद्धमासिक्तंतादृगेवभवति । एवं मुनेर्विजानतआत्माभवतिगोतम ॥ १५ ॥ इतिद्वितीयाध्यायस्यप्रथमावल्ली ॥ २ ॥ १ ॥

भाष्यं० ॥ ओं । इदंपुरंभगवदधीनमित्यधिष्ठाय । अजस्येदंपुरमितिस्थितिंकृत्वा ।

वद्धीनमित्यनेनवर्णितइतिभावः । स्थितिंकृत्वेत्यनेनानुष्ठायेत्यस्यध्यात्वेतिव्याख्यानमपदार्थत्वादसदित्युक्तंभवति । अविद्याकामकर्मादिबंधनैर्विमुक्तोभवति । विमुक्तश्चसन्विमुच्यतेपुनश्चशरीरंनगृह्णातीतिव्याख्यानमसत् । शरीराग्रहणस्यविमोचनपदार्थत्वाभावात् । अतःपूर्वविमुक्तएवपश्चान्मुच्यतइतिव्याख्येयं । नन्वेतदप्ययुक्तं । संसारदशायांमुक्तत्वाभावात् । मुक्तस्यमोचनासंभवाच्चेत्यतःप्रमाणेनतद्यथावद्व्याचष्टे ॥ **विमुक्तइति** ॥ पूर्वमुक्तः । मुख्यतइत्युक्तंविवृणोति । दुःखेति ॥ १ ॥ हंसइतिमंत्रंविप्रतिपत्तिनिरासायप्रमाणेनव्याचष्टे ॥ **नित्यमिति** ॥ आधिक्यार्थकानुस्वारार्थोनित्यमिति । हेत्यस्यार्थोहीनइति । ओहाक्त्यागइतिधातोः । अखिलैर्दोषैरित्यस्ययोग्यतयासंबंधः । सइत्यस्यार्थःसाररूपइति । एतेनहंतिगच्छतीतिहंसइतिव्याख्यानंप्रमाणविरुद्धत्वादपास्तं । दिव्यादित्यात्मनासीदतीतिशुचिषदितिव्याख्याननिरासायाह ॥ **वायुस्थइति** ॥ शुचिर्वायुस्तत्रसीदतीतिशुचिषत् । वसुर्वाय्वात्मनांतरिक्षेसीदतीत्यंतरिक्षसदितिव्याख्याननिरासायाह ॥ **वरसुरिति** ॥ उत्तमसुखरूपइत्यर्थः । स्वित्यानंदःसमुद्दिष्टइत्युक्तेः । वशब्दोवरत्ववाची । होताग्निरितिव्याख्यानमसदितिभावेनाह ॥ **होतेति** ॥ सर्वेंद्रियविषयहोतृत्वादित्यर्थः । वेद्यांसीदतीतिवेदिषदितिपदार्थमभिप्रेत्यतात्पर्यमाह ॥ **वेद्यामिति** ॥ अतिथिःसोमःसन्द्रोणकलशेसीदतीतिदुरोणसदितिव्याख्याननिरासायअतिथिशब्दार्थंतावदाह ॥ **अत्यन्नइति** ॥ अतिशयितान्नइत्यर्थः । चशब्दएवार्थः ।

---

भाष्यं० ॥ विमुक्तोनिरंभीमानात्पूर्वमेवापरोक्षवित् । मुख्यतोमुच्यतेपश्चाद्दुःखाद्याभासहानतइतिच ॥ नित्यंहीनोखिलैर्दोषैस्साररूपोयतोहरिः । हंसइत्युच्यतेतस्माद्वायुस्थश्शुचिषत्स्मृतः । वरसुर्वसुरित्युक्तस्सएवाप्यंतरिक्षगः । होतासर्वेंद्रियादिस्थोवेद्यांपूज्यश्चवेदिषत् । अत्यन्नश्चातिथिःप्रोक्तो

कथमस्माच्छब्दादयमर्थोलभ्यतइत्यतस्थशब्दार्थमाह ॥ **यस्मादिति** ॥ उच्यते अन्नंथमितिच्छंदोगश्रुतावितिशेषः । अतिश ब्दश्चातिशयार्थकःप्रसिद्धएवेतिभावः । इदानींदुरोणसदित्यस्यार्थमाह ॥ **सइति** ॥ द्रोणकलशेस्थितइतिशेषः । स्थितइत्यस्य सप्तम्यंततयात्रापिसंबंधोवा । द्रोणेस्थितंदुरोणं । तच्चयोग्यतयासोमएवतत्रसीदतीतिदुरोणसदित्यर्थः । नृषद्वरसदित्यस्यार्थ माह ॥ **नृष्विति** ॥ वरेष्वित्यनुवादेनदेवेष्वितिव्याख्यानं । अपिशब्दात्स्थितइत्यनुकर्षः । तुशब्दोनरापेक्षयाविशेषद्योतकः। ऋतसदित्यस्यार्थः ऋतरूपइति । याथार्थ्यनियमादित्यर्थः । स्थितइत्यनुवर्तते । व्योमसदित्यस्यार्थमाह ॥ **व्योमाख्येति** ॥ प्रकृतौव्योमशब्दंनिर्वक्ति ॥ **व्योतमिति** ॥ अब्जागोजाऋतजाअद्रिजाइत्यनेनब्रह्मणःशंखशुक्तिमकरादिसर्वात्मकत्वमुच्यतइ तिव्याख्याननिरासायअब्जागोजाऋतजाअद्रिजाइत्यभेदोक्तौनिमित्तमाह ॥ **अब्जेति** ॥ अब्जाश्शंखादयः गोजाःव्रीहियवा दयः अद्रिजानद्यादयः आस्तेयतइतिशेषः । अब्जादिकःअब्जाइत्यादिनामकः । शुचिषदित्यादिनासर्वत्रावस्थितभगवत्स्वरूप कथनादत्रापितत्तत्स्थितत्वेनैवतदभेदोक्तिरितिव्याख्येयमितिभावेनैवमित्युक्तं । ऋतजाइत्यस्यार्थमाह ॥ **तथैवेति** ॥ ऋतेषु मुक्तेषुनियामकतयाजातइतिऋतजाइतिशेषः । अर्थविशेषकथनायैवक्रमोल्लंघनं । कथंमुक्तानांऋतत्वमित्यतआह ॥ **गताइति**॥ ऋगतावितिधातोरित्यर्थः । विष्णुमित्यस्ययोग्यतयासंबंधः । अब्जादिरूपेणसर्वात्मापिसन्नृतमवितथस्वभावइतिव्याख्याननिरा

भाष्यं० ॥ यस्मादन्नंथमुच्यते । सद्रोणकलशेसोमेस्थितउक्तोदुरोणसन् । नृषुस्थितश्चदेवेषुवरेष्वपिसएववतु । ऋतरूपेतथावेदेव्योमा ख्यप्रकृतावपि । व्योतंजगदिदंयस्यांसाव्योमश्रीरुदाहृता । अब्जगोजाद्रिजेष्वेवमास्तेसोब्जादिकस्ततः । तथैवर्तेपुमुक्तेषुगतास्तेविष्णुमित्यृताः ।

सायऋतमित्यस्यार्थमाह ॥ वेदैरिति ॥ ऋतशब्दोवेदवाचीत्युक्तं । वेदाभेदस्यबाधितत्वात् वेदैःप्रोक्तइत्युक्तं । वाच्यवाचकयोरभेदव्यपदेशस्यअयंवैलोकःप्रथमामहानाम्नीत्यादौदृष्टत्वात् । अब्जाइत्यादिवत्वेदस्थत्वात्वेदाभेदोक्तिरित्यंगीकारेऋतसदित्यनेनपुनरुक्त्यापातः । देवताधर्मादिनिरासायमुख्यतयेत्युक्तं । एवशब्देनपरोक्तार्थव्यावृत्तिः । चशब्दःपूर्वोक्तविशेषणसमुच्चायकः । बृहत्महत् सर्वोपादानत्वादितिव्याख्याननिरासायाह ॥ बृहदिति ॥ बृहच्चेतिचशब्दान्वयः । पूर्णगुणत्वादेवेत्येवशब्दान्वयः । तेनपरोक्तहेतुनिरासः । नन्वादित्यपरएवायंमंत्रः । असौवैदूरोहोयोसौतपतीत्युक्त्वाहंसःशुचिषदित्येषवैहंसःशुचिषदित्यादिश्रुतावुक्तत्वात् । हंसइतिहंसाःसूर्यस्यरश्मयइत्युक्तत्वाच्चेतिचेन्न । आदित्यांतर्गतभगवत्परत्वेनाविरोधात् । नप्राणेनेत्यस्यप्राणेनापानेनचक्षुरादिनावामर्त्योनजीवति । अतस्तदितरेणजीवोजीवति । यस्मिन्जीवेएतावुपाश्रिताविति व्याख्यानमसत् । प्राणापानादिवत्जीवस्यापिजीवनहेतुत्वाभावात् । यथाश्रुतोपपत्तौचक्षुराद्युपलक्षणायोगाच्च । अतोत्रप्राणापानात्मकमुख्यवायोरेवजीवनहेतुत्वंनिषिध्यविष्णोरेवतद्धेतुत्वमुच्यते । नन्वेतदप्ययुक्तं । मुख्यप्राणस्यजीवनहेतुत्वस्य यत्प्राप्तिर्यत्परित्यागउत्पत्तिर्मरणंतथेत्यादिप्रमाणसिद्धत्वादित्यतस्तद्व्याचष्टे ॥ नकेवलमिति ॥ केवलैवशब्दाभ्यामन्यनिरपेक्षतामाह । तथाचश्रुतौस्वातंत्र्येणजीवनहेतुत्वंनिषिध्यतइतिभावः । तर्हिकीदृशश्चेतनविधारकइतिभावेनपृच्छति ॥ किंत्विति ॥ तदुत्तरत्वेनय

भाष्यं० ॥ वेदैर्मुख्यतयाप्रोक्तऋतमित्येवचोच्यते । बृहत्पूर्णगुणत्वाच्चसएवपुरुषोत्तमः । नकेवलंप्राणएवचेतनानांविधारकः । किंतु

स्मिन्नेतावुपाश्रिताविति वाक्यतात्पर्यमाह ॥ विष्णुमिति ॥ यस्मिन्नेतावित्येतत् इतरेणजीवंतीत्यत्रहेतुरितिभावेनइतरेणत्विति वाक्यंतात्पर्यतोव्याचष्टे ॥ अतइति ॥ अग्निर्यथैकएवप्रकाशात्मासन् भुवनमिमंलोकं प्रविष्टोरूपंरूपंप्रति दार्वादिदाह्यभेदं प्रति प्रतिरूप स्तत्र स्वयंप्रतिरूपवान् दाह्यभेदैर्बभूव । तथासर्वभूतांतरात्माएकएवदार्वादिष्विवसर्वदेहंप्रतिप्रविष्टत्वात्प्रतिरूपो बभूव । बहिश्चस्वेनाविकृतेनरूपेणाकाशवत् । तथान्योदृष्टांतोवायुर्यथैकइत्यादि । प्राणात्मनादेहेष्वनुप्रविष्टः । रूपंरूपंप्रतिरूपेत्यादिसमानमित्यस्मिन्मंत्रद्वयेआत्मैकत्वमुच्यतइत्यसत् । यदेवेहतदमुत्रेत्यादिनाबहुशस्तस्योक्तत्वेनपुनरुक्त्यापातात् । नचानेकतार्किकबुद्धिविचालितांतःकरणानांप्रमाणोपपन्नमप्यात्मैकत्वविज्ञानंअसकृदुच्यमानमपिऋजुबुद्धीनांचेतसिनाधीयतइतितत्प्रतिपादनेआदरवतीश्रुतिःपुनःपुनराहेतियुक्तं । आत्मैकत्वस्याप्रामाणिकत्वात् । नतावत्तत्रप्रत्यक्षं । चेष्टालिंगेनपरात्मसिद्धौततोभेदस्यैवस्वस्मिन्ग्रहणेनतदेकत्वग्राहिप्रत्यक्षाभावात् । विमतानिशरीराणिदेवदत्तस्यैवभोगायतनानिशरीरत्वादित्यनुमानं । विमतानिकलत्राणिदेवदत्तस्यैवभोगायतनानिकलत्रत्वादित्युपहासास्पदाभाससमानयोगक्षेमत्वादुपेक्ष्यं । आगमाश्चान्यथाव्याख्याताइतिभावेनाग्निर्यथैकइतिमंत्रद्वयंप्रमाणेनैवान्यथाव्याचष्टे ॥ अग्निरिति ॥ अग्निर्देवतारूपः । लोकेष्वित्यनेनभुवनमितिजात्येकवचनमित्युक्तंभवति । तेनभुवनमिमंलोकमितिव्याख्यानमपास्तं । एकइत्यस्यसावधारणत्वमभिप्रेत्यान्योनविद्यतइत्या

भाष्यं० ॥ विष्णुंसमाश्रित्यप्राणोजीवान्बिभर्त्ययं । अतोमुख्याश्रयोविष्णुश्चेतनानांस्वतंत्रतः । अग्निर्यथैकोलोकेषुप्रविष्टोन्योनविद्यते । पाकादिकर्ता

ह्यपाकादिकर्तेतिशेषोक्तिः।अनेनाग्निर्यथैकोभुवनंप्रविष्टइत्येतद्व्याख्यातं।पूर्वोक्ताग्निरेवबभूवेत्यत्रकर्तेतिप्रतीतिंनिवारयन् रूपंरूप मित्येतद्व्याचष्टे ॥ अथापीति ॥ प्रतिरूपकाः प्रतिबिंबभूताः । श्रुतावेकवचनप्रयोगोजात्यभिप्रायेणेतिबहुवचनप्रयोगः । वायुर्यथैकइतिदृष्टांतवाक्यंव्याचष्टे ॥ एवमिति ॥ एवंशब्दोदृष्टांतांतरत्वज्ञापकः । यथेत्यनुवर्तते । अपिशब्दो लोकेषुप्रविष्टइत्यस्यानुकर्षणार्थः । वायुरेकएवेतिशेषः । नन्वचेतनवायुरेवनास्ति। प्रमाणाभावादित्यतउक्तं। स्पर्शगम्यइति।एत च्छंकापरिहारार्थमेवप्राक्एतेप्रत्यक्षसिद्धाइत्युक्तं । स्पर्शगुणानुमेयइत्यर्थः । त्वगिंद्रियव्यापारानंतरमुपलभ्यमानः स्पर्शःक्वचि दाश्रितोगुणत्वात् रूपवदित्यनुमानात् सामान्यतःस्पर्शाश्रयद्रव्यसिद्धौ नतत्पृथिव्यादित्रयं रूपरहितत्वात् नाप्याकाशा दिकं तस्यास्पर्शवत्त्वादिति यद्रूपरहितंस्पर्शवद्द्रव्यंसिध्यति सएववायुरितिभावः । ननुकुतएवंवायोःस्पर्शगुणानुमेयत्वं । बा ह्यप्रत्यक्षत्वंकिंनस्यादितिचेत् न । अरूपिद्रव्यत्वेनबाह्यप्रत्यक्षागोचरत्वस्यास्थितत्वात् । नचानुमितस्यवायोःप्रतिवादिनानंगी कृतत्वेनाश्रयासिद्धिः । अध्यक्षस्यपक्षीकारेधर्मिग्राहकमानविरोधइतिवाच्यं । वायोरेवात्रपक्षत्वेनानुमितत्वादेःपक्षतावच्छेदक त्वेनानुपादानात् । सचास्माकमनुमानेन परस्यप्रत्यक्षेणसिद्धइत्यदोषः । नचपंचीकरणपक्षेऽसिद्धिः । प्रत्यक्षरूपरहितद्रव्यत्व स्यहेत्वर्थत्वात् । तथाचश्रुतिः । यदन्यद्वायोश्चांतरिक्षाच्चैतत्सदितिवायुरंतरिक्षंचासदितिसत्त्वासत्त्वव्यपदेशस्यप्रत्यक्षाप्रत्यक्ष

भाष्यं ॥ अथाप्यस्यदेवस्यप्रतिरूपकाः। रूपंरूपंप्रतिह्येतेसंत्यचेतनवह्नयः। एवंदेवोवायुरपिधारकोन्योनविद्यते । रूपंरूपंतथाप्यस्यप्रत्यभूत्प्र- तिरूपकः । अचेतनस्स्पर्शगम्योयोयं ।

निमित्तकत्वात् । तथाचोक्तंसुधायां । प्रत्यक्षाप्रत्यक्षपंचमहाभूतपरत्वादिति । मूर्त्तत्वामूर्त्तत्वंचेदमेव । अन्यथापंचानामपिपरिच्छिन्नपरिमाणत्वेनविभागानुपपत्तेः । तथाचस्मृतिः । आकाशवायूत्वव्यक्तेइतरेंडेप्रकाशिताः । तथात्वाद्बाह्यभूतानामंडस्थानांचसागतिरिति । किंचभूतमप्यसितंदिव्यदृष्टिगोचरमेवत्वित्यनुव्याख्यानेभूताकाशस्याप्रत्यक्षत्वोक्तिरपिवायोरप्रत्यक्षत्वसूचिका । द्वयोरेककोटित्वेनव्यवहारात् । उक्तंचमात्स्ये । आकाशवायूत्वव्यक्तेइतरेंडेप्रकाशिताः । तथात्वाद्बाह्यभूतानामंडस्थानांचसागतिरिति । अतएवपद्धतौवायुस्पर्शोपित्वचोविषयइतिवायुस्पर्शस्यैवत्वगिंद्रियविषयत्वमुक्तं । नवायोः । एतेनवायोःप्रत्यक्षत्ववंवदंतोनिरस्ताः । तथाहि । नवायोःप्रत्यक्षत्वंवक्तुंयुक्तं । तत्प्रमाणाभावात् । नतावत्प्रत्यक्षं । वायुर्वातीतिज्ञानस्यवायुगोचरत्वेपितत्प्रत्यक्षत्वागोचरत्वात् । नचतस्यैवसाक्षात्काररूपत्वेनतद्विषयत्वेनैववायोःप्रत्यक्षत्वसिद्धिः । तस्यसाक्षात्कारत्वेविवादात् । नचेयंप्रतीतिस्त्वगिंद्रियजन्या । तद्व्यापारान्वयव्यतिरेकानुविधायित्वादितितत्सिद्धिरितिवाच्यं । त्वगिंद्रियव्यापारस्यस्पर्शग्रहोपक्षीणत्वेनानन्यथासिद्धान्वयव्यतिरेकयोरभावात् । साधारणयोस्तुव्यभिचारित्वात् । वायुंस्पृशामीत्यनुभवोस्तीतिचेत् । न । पुष्पाणिजिघ्रामीत्यनुभववदुपपत्तेः । नचैवंघटोपिस्पार्शनोनस्यादितिवाच्यं । तस्यवक्ष्यमाणनियामकविशिष्टतयास्पार्शनत्वकल्पनात् । अत्रतुतदभावात् । नाप्यनुमानं । वायुःप्रत्यक्षःप्रत्यक्षस्पर्शाश्रयत्वादित्यत्रोद्भूतरूपवत्त्वस्योपाधित्वात् । अतएवमहत्त्वेसत्युद्भूतस्पर्शवत्त्वादित्यपास्तं । परैरुद्भूतत्वानंगीकारेणवाद्यसिद्धेश्च । नचोद्भूतपदंप्रत्यक्षपरं । महत्त्वविशेषणवैयर्थ्यात् । तत्त्यागेपूर्वाभेदात् । ऊष्मणिव्यभिचाराच्च । नचतस्यपक्षसमत्वान्नव्यभिचारः । ऊष्मवत्परंब्रह्मयन्नजिघ्रंति

नपश्यंतिनशृण्वंतिनविजानंतीतिश्रुत्याब्रह्मणोप्रत्यक्षत्वेऊष्मणोदृष्टांतत्वकथनेनचतदप्रत्यक्षत्वस्यसुदृढनिश्चितत्वात् । प्रत्यक्ष शब्दाश्रयस्याप्याकाशस्याप्रत्यक्षत्ववत्प्रत्यक्षस्पर्शाश्रयस्यापिवायोः अप्रत्यक्षत्वोपपत्त्याऽप्रयोजकत्वात् । वायुःस्पार्शनःउद्भूत रूपानधिकरणत्वेसत्युद्भूतस्पर्शाधिकरणत्वात्घटवदित्यपिन । परमाण्वादौव्यभिचारात् । नचोद्भूतपदंप्रत्यक्षपरं । उक्तन्याये नाप्रयोजकत्वात् । द्रव्यत्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकचाक्षुषत्वस्योपाधित्वाच्च । ननुद्रव्यस्पार्शनत्वेनचाक्षुषत्वंप्रयोजकं । किंतुमहत्त्वेसत्युद्भूतस्पर्शवत्त्वमेव । अतःकथंनवायुःप्रत्यक्षइतिचेत् । न । परमाणुष्वपिमहत्त्वसद्भावस्यान्यत्रोपपादितत्वेनते षामपिस्पार्शनत्वप्रसंगात् । त्वन्मतेपि(त्रुटेः)त्र्यणुकस्यमहत्त्वेसत्युद्भूतस्पर्शवत्त्वांगीकारेणस्पार्शनत्वप्रसंगाच्च । नहिजालसूर्यम रीचिस्थमतिसूक्ष्मतममुपलभ्यमानंवस्तु त्वचाकेनचित्गृह्यते । गृह्यतएव । विविच्यतुनगृह्यतेसूक्ष्मत्वात्इतिवदन्देवानांप्रियो सावुपेक्षणीयः । अनुभवविरोधात् । महत्त्वविशेषसमानाधिकरणोद्भूतस्पर्शवत्त्वंप्रयोजकमितिचेन्न । ऊष्मणोवायूपनीतशीतो ष्णद्रव्यस्यापिस्पार्शनत्वापातात् । नचतत्रानुमतिः । उदाहृतश्रुतिविरोधात् । तत्संख्यापरिमाणसंयोगविभागकर्मणांस्पार्शन त्वापाताच्च । योग्यव्यक्तिवृत्तित्वेनतेषांयोग्यत्वात् । नह्यूष्मादिजातीयेक्वचिद्घटादाविवकरपरामर्शेकदापिकेनापिसंख्यागृह्यते । ननुद्रव्यस्पार्शनत्वेचाक्षुषत्वमपिनप्रयोजकं । आलोकादीनामपिस्पार्शनत्वापातादितिचेन्न । विषमव्याप्तस्याप्युपाधित्वात् । के चित्तु महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वंबाह्यद्रव्यप्रत्यक्षत्वेतंत्रमितिनवायुःप्रत्यक्षइत्याहुः । तन्न । वर्णद्रव्यत्वस्यान्यत्रव्यव स्थापितत्वेनतत्रोक्तप्रयोजकाभावात् । अन्येतुद्रव्यस्पार्शनएवेदंप्रयोजकमितिवायुर्नस्पार्शनइत्याहुः । तदपिन । तमसआलो

कस्यनयनगतपित्तद्रव्यस्यचस्पार्शनत्वप्रसंगात् । वस्तुतस्तु । श्रोत्रभिन्नबाह्येंद्रियजन्यास्मदादिद्रव्यप्रत्यक्षत्वेमहत्वविशेषसमानाधिकरणोद्भूतरूपवत्त्वंप्रयोजकमितिवायुर्नप्रत्यक्षः । एकेतुमहत्त्वविशेषसमानाधिकरणोद्भूतरूपस्पर्शवत्त्वंद्रव्यस्पार्शनत्वेप्रयोजकं । एकैकस्यव्यभिचारात् । विनिगमनाविरहेणोभयोरपिप्रयोजकत्वात् । अतएवघटादिःस्पार्शनः । अतएवोक्तंसुधायां । द्रव्यस्यहिअस्मदादिप्रत्यक्षत्वंउद्भूतरूपस्पर्शवत्त्वेनव्याप्तमिति । एवंचवायुर्नप्रत्यक्षइत्याहुः । एवंमंत्रद्वयगतंदृष्टांतवाक्यंव्याख्यायेदानींएकस्तथासर्वभूतांतरात्मेतिदार्ष्टांतिकवाक्यंव्याचष्टे ॥एवमिति॥ जनार्दनइतिविशेष्याध्याहारः । एकइत्यस्यसावधारणत्वमभिप्रेत्याह । नान्यइति । सर्वभूतान्तरात्मेत्यस्यार्थःसर्वेति । एकएवसर्वजीवांतरस्थितइत्यस्यार्थलब्धमर्थमाह॥ स्वतंत्रइति ॥ बाह्याश्चतेततइत्यत्रहेतुकथनार्थमेतत् । रूपंरूपमित्येतदपेक्षिताध्याहारेणव्याचष्टे ॥ रूपंरूपमिति ॥ प्रतिरूपइत्यस्यार्थःप्रतिबिंबाइति । बभूवुरितिवक्ष्यमाणमत्रापिसंबध्यते । एकवचनप्रयोगादेकस्यैवप्रतिबिंबत्वमुच्यतइतिशंकापरिहारायबहुवचनप्रयोगः । चेतनाअस्यजनार्दनस्यरूपंरूपंप्रतिप्रतिबिंबावभूवुरित्यन्वयः । ननुचेतनानांभगवत्प्रतिबिंबत्वेबिंबप्रतिबिंबयोरैक्यात्तयोरभेदस्स्यादित्याशंकापरिहारायश्रुतौबहिश्चेत्युक्तमितिभावेनतद्व्याचष्टे ॥ बाह्याश्चेति ॥ ततोजनार्दनात् । ननुचेतनाभगवतोबाह्याइत्ययुक्तं । भगवतोविभुत्वेनचेतनानांतदनधिष्ठितप्रदेशवृत्तित्वासंभवादित्यतोबाह्याइत्युक्तंविवृणोति ॥ नास्येति ॥ ननुप्रतिरूपोबभूवेतिलिट्प्रयोगात्प्रतिबिंबत्वस्यकादाचित्कत्वमुच्यतइतिप्रतीयते । विचित्रानंतजीवानांचकथमविचि

भाष्यं ॥ एवंजनार्दनः । एकस्स्वतंत्रोनान्योस्तिसर्वजीवांतरस्थितः । रूपंरूपंप्रतिह्यस्यप्रतिबिंबाश्चचेतनाः । बाह्याश्चतेततोनास्यस्वरूपंतेकथंचन ।

त्रैकभगवत्प्रतिबिंबत्वमित्यतआह ॥ अनादीति ॥ चशब्दोऽपिशब्दार्थः । अनंतंअनंतप्रकारंकंसुखंयेषांतेअनंतकाः । विचित्रस्वभावाअनंताअपिते चेतना अविचित्रस्यैकस्यैवभगवतोऽनाद्यनंतप्रतिबिंबाबभूवुरित्येतच्छ्रुत्यादिप्रसिद्धमितिहिशब्दार्थः । सूर्यकांतगतसूर्यप्रतिबिंबस्याग्निजनकत्वेपिजलगतस्यतदभावदर्शनात् बिंबैक्येपिप्रतिबिंबभेदस्तदवैचित्र्येपितद्वैचित्र्यमुपपन्नमितिभावः । सूर्योयथेतिमंत्रस्यसूर्यःसकललोकस्यचक्षुषि पुरीषाद्यशुचिप्रकाशनेनचक्षुषउपकारंकुर्वन्नपि तद्दर्शिनःसर्वलोकस्य चाक्षुषैरशुच्यादिदर्शननिमित्तैराध्यात्मिकैर्दोषैर्बाह्यैश्चाशुच्यादिसंसर्गदोषैश्चनलिप्यतेइतिव्याख्यानमसत् । सूर्यस्यपुरीषाद्यशुचिप्रकाशनेनचाक्षुषदोषलेपप्रसक्तेरेवाभावेनतन्निषेधायोगात् । अन्यथादीपप्रभादेरपिजडस्यतत्प्रसक्तिःस्यात् । सर्वस्यापिदोषस्यांतरत्वेनबाह्यत्वायोगाच्च । नचदोषनिमित्तस्यबाह्यत्वेनदोषेबाह्यत्वोपचारः । क्लिष्टत्वात् । आध्यात्मिकैर्दोषैरित्यश्रुतकल्पनापाताच्चेतिभावेनतदृष्टांतवाक्यंव्याख्यातुंतदुपयुक्तंतावदाह ॥ सूर्यइति ॥ अस्य सूर्यस्य प्रतिबिंबोबाह्यकंचक्षुरित्यन्वयः । किंतदित्यतोदृष्टांतवाक्यंव्याचष्टे ॥ बाह्येति ॥ अनेनबाह्यदोषैरित्यत्रबुद्ध्याविवेकेनबाह्यत्वंचक्षुषोविशेषणमित्युक्तंभवति । नचाकाशेपरिवर्तमानस्यसूर्यस्यकथमांतरचक्षुष्ट्वं । सूर्यप्रतिबिंबभूतबाह्यचक्षुश्चकिमित्यतआह ॥ अंतश्चक्षुरिति ॥ चक्षुरभिमानिसूर्याख्यदेवतेत्यर्थः । एकस्तथेतिदार्ष्टांतिकवाक्यंव्याचष्टे ॥ एवमिति ॥ बाह्योत्यंतभिन्नः । तत्रहेतुः स्वतंत्रत्वादिति । भू

---

भाष्यं ॥ अनादिप्रतिबिंबाश्चबभूवुस्तेह्यनंतकाः । सूर्योयथांतरंचक्षुःप्रतिबिंबोस्यबाह्यकं । बाह्यचक्षुर्गतैर्दोषैरंतश्चक्षुर्नलिप्यते । अंतश्चक्षुर्देवतातुबाह्यंचक्षुरचेतनं । एवंबाह्यस्स्वतंत्रत्वाज्जीवेभ्यःपुरुषोत्तमः । अस्वतंत्रस्यजीवस्यदुःखैर्नैवहिलिप्यते ।

तांतरात्मत्वोक्त्यालब्धमेतत् । जीवेषुव्यभिचारशंकापरिहारायास्वतंत्रस्येतिजीवविशेषणं । दुःखेनेतिएकवचनप्रयोगोजात्यभिप्रायेणैव नत्वेकत्वाभिप्रायेणेतिबहुवचनप्रयोगः । ननुचेतनत्वात्विष्णोरपिजीववत् दुःखलेपःकिंनस्यात् । नहिचेतनत्वाविशेषेपिविष्णोःदुःखालेपेविशेषहेतुरस्तीत्यतआह ॥ **चेतनाभासकइति** ॥ अनेनचेतनश्चेतनानामित्यस्यतात्पर्यमुक्तंभवति । चेतनत्वंनदुःखलेपप्रयोजकं। किंतुचेतनाभासकत्वमेव । हरिस्तुपरमचेतनइतिनदुःखलेपइतिभावः। हरेःपरमचेतनत्वेहेतुमाह ॥ **स्वतंत्रत्वादिति** ॥ परमचेतनत्वेपिदोषलेपःकिंनस्यादित्यतआह ॥**स्वतंत्रोहीति**॥ परमचेतनःस्वतंत्रएव। स्वतंत्रस्यनैवदोषलेपः । अन्यथास्वातंत्र्यभंगादितिभावः । दुःखेप्रकृतेपिदोषेणेतिवदताश्रुतौदुःखपदमज्ञानाद्युपलक्षणमित्युक्तंभवति । एकस्तथासर्वभूतांतरात्मारूपंरूपंप्रतिरूपोबहिश्चेत्यस्यपरोक्तार्थे नप्रमादेनापिमतिःकर्तव्येतिभावेनप्रमाणेनव्याकृतमपितद्वाक्यंस्ववचनेनस्पष्टयति ॥ **सइति** ॥ सइत्यध्याहारः । सर्ववाक्यंसावधारणमितिन्यायेनैकएवेत्युक्तं । प्रकृतपरमात्मनएवोत्तरत्रकर्तृत्वेनान्वयइतिभ्रांतिनिवारणाय रूपंरूपमित्येतद्योजयति ॥ **तस्येति** ॥ जीवइतिकर्त्रध्याहारः । जीवःप्रतिरूपाख्योबभूवेतिसंबंधः । अनेनदृष्टांतवाक्याद्बभूवेतिपदमनुवर्तनीयमित्युक्तंभवति । बहिश्चेत्येतदवधिप्रदर्शनेनव्याचष्टे ॥ **बहिश्चेति** ॥ कथंसर्वगतस्यात्मनोबहिर्जीवइत्यतस्तद्विवृणोति ॥ **नितरामिति** ॥ भेदाभेदव्यावृत्त्यर्थंनितरामिति । अनेनबहिःशब्दोभिन्नार्थ

भाष्यं ॥ चेतनाभासकोजीवःपरमश्चेतनोहरिः । स्वतंत्रत्वात्स्वतंत्रोहिनैवदोषेणलिप्यते । इतिकौर्मे । सएकएवसर्वभूतांतरात्मा । तस्यरूपंरूपंप्रतिरूपाख्योजीवोबभूव । बहिश्चासौपरमात्मनोनितरांभिन्नः । परतंत्रत्वात् ।

श्चशब्दएवार्थइत्युक्तंभवति । तत्रहेतुःपरतंत्रत्वादिति । अनादिप्रतिबिंबाश्चेत्युक्तमयुक्तं । तथासतिबभूवेतिभूतार्थकलिट्प्रत्ययानुपपत्तेरित्यतस्तत्रप्रयोगंदर्शयति ॥ आत्मैवेति ॥ यथात्मसत्तायाःसार्वकालिकत्वेनासीदितिप्रयोगःसार्वकालिकोव्याख्येयस्तथात्रापीतिभावः । यथोक्तंप्रयोगएककालीनःसर्वकालेनुषज्यते । ददर्शविष्णुरित्यादौनित्यचिद्रूपतोहरेरिति । तमात्मस्थंयेनुपश्यंतीत्यस्य तमात्मस्थं स्वशरीरहृदयाकाशेबुद्धौचैतन्याकारेणाभिव्यक्तमितिव्याख्यानमसदितिभावेनप्रमाणेनैवव्याचष्टे ॥ आत्मनिस्थमिति ॥ परोक्तएवार्थःकिंनस्यादित्यतआह ॥ जीवैक्येनेति ॥ तदेतदितिमन्यंतेनिर्देश्यंपरमंसुखमित्यत्रज्ञानिसुखमेवोच्यते । परमंसुखमितिसुखश्रुतेः । नचासौविष्णावपिसावकाशा । तेषांसुखंशाश्वतमितिज्ञानिसुखस्यैवप्रकृतत्वेनतस्यैवतदेतदितिपरामर्शात् । नचभगवतोपिप्रकृतत्वात्तत्परामर्शोयमस्त्वितिवाच्यं । तस्यनपुंसकसुखशब्देनाप्रकृतस्यतदित्यादिपरामर्शायोगादित्यतःतद्व्याचष्टे ॥ एतदेवेति ॥ एवकारेणज्ञानिसुखव्यवच्छेदः । तथाचतदेतदितिनपुंसकशब्देनैकंरूपमितिप्राक्प्रकृतभगवद्रूपंपरामृश्यतइतिनानुपपत्तिरितिभावः । ननुकिंदूरस्थभगवद्रूपपरामर्शग्रहणेन । समीपस्थज्ञानिसुखपरामर्शएवायमितिकिंनस्यादितिचेन्न । सुखस्यपरमत्वविशेषणात्ज्ञानिसुखस्यचपरमत्वायोगादितिभावेनाह ॥ ज्ञानिसुखमिति ॥ भगवत्सुखविष्णुमात्रमित्यर्थः । अनेनतदेतदित्यस्ययदात्मस्वरूपंसुखमनिर्देश्यं परममप्राकृतं वाङ्मनसयोरगोचरमपि तत् ब्रह्मण

---

भाष्यं ॥ आत्मैवेदमग्रआसीदित्यादिवदनादित्वापेक्षया । आत्मनिस्थंहरिंजानन्मुच्यतेनात्रसंशयः । जीवैक्येनतुतंध्यायंस्तमस्यंधेपतेद्ध्रुवमितिच । एतदेवभगवद्रूपंपरमंसुखं । ज्ञानिसुखंतुतद्विष्णुमात्रं ।

एतत् प्रत्यक्षमेवेतिमन्यंतइतिव्याख्यानंचापास्तं । परमात्मस्वरूपसुखस्यप्रत्यक्षत्वायोगात् । जीवब्रह्माभेदस्तुबाधितइत्युक्तं । नन्वेतदित्यस्यानुवादतयाव्याख्यानेतच्छब्दोव्यर्थःस्यादितिचेन्न । रूपंरूपंप्रतिरूपोवभूवेतिदूरे । एकंरूपमितिसंनिधानेचभगवद्रूपस्यप्रकृतत्वेनतथैवपरामर्शार्थत्वात् । तदित्यस्यापिततत्वार्थकत्वेनपरमसुखत्वादिवत्विधेयत्वाद्वा । नचैवंवाक्यभेदप्रसंगः । अवांतरवाक्यभेदस्यादोषत्वात् । महावाक्यभेदस्याभावात् । अन्यथासत्यंज्ञानमनंतंब्रह्मेत्यत्रकागतिः । अस्तुवात्वदुक्तरीत्याएतदित्यस्यविधेयत्वं । तथापियद्ब्रह्मानिर्देश्यंसुखमितिवदंति । तदेतत् प्रकृतपरमात्मनोरूपमितिवाक्ययोजनोपपत्तिः । उक्तंचन्यायविवरणे । यद्ब्रह्मानिर्देश्यंसुखमितिवदंतितदेतत्स्वरूपमितिमन्यंतइति । विष्णोरेवपरमंसुखं ज्ञानिसुखंतुतद्विप्रुट्कमित्यत्रप्रमाणमाह ॥ **ब्रह्मादीनामिति** ॥ चशब्दोपिशब्दार्थतयाकैमुत्यसूचकः । विष्णुसुखस्य विप्रुट्कमितिशेषः । ब्रह्मादीनांविष्णुसुखैकदेशसुखवत्त्वेतदभेदःस्यादित्यतआह ॥ **प्रतिबिंबइति** ॥ किमुभातिनभातिवेत्येतत्प्रश्नवाक्यंकृत्वातत्रोत्तरमिदंभातिनभातिचेतिव्याचक्षते । तदसत् । उत्तरवाक्यस्याश्रुतस्यैवकल्प्यत्वात् । नचकिमुशब्दपरित्यागेनतदेवोत्तरमितिवाच्यं । आवृत्तिप्रसंगात् । मन्यंतइतिभानस्यैवोक्तत्वेनकिमुभातिनभातिवेतिप्रश्नस्यैवायोगाच्च । भातिनभातीतिपरिहारस्यव्याहतत्वाच्च । तस्मात्किमुभातीतिप्रश्ने नभातिवेतिपरिहारइत्याश्रयणीयं । नन्वेतदप्ययुक्तं । मन्यंतइतिभानस्यैवोक्तत्वेनप्रश्नोत्तरयोरनुपपत्तेरित्यतआह ॥ **सम्यग्भातीति** ॥ श्रुत्यनुसारादत्रापिकिमुशब्दोयोज्यः । सम्यक् साकल्येन । किमुसम्यग्भातीति 

भाष्यं ॥ ब्रह्मादीनांचमुक्तानांसुखंविष्णुसुखस्यतु । प्रतिबिंबस्तुविप्रुट्कोविष्णोरेवपरंसुखं । सम्यग्भातिनभातीतिजानीयांतत्कथंन्वहं ।

प्रश्ने नभातीत्युत्तरमितियोज्यं । अतएवोक्तंतत्वप्रकाशिकायां नभातीत्युक्ताज्ञेयत्वंचेति । इतिशब्दःश्रुत्यनुसाराद्वाशब्दार्थो वा । अव्ययानामनेकार्थत्वात् । तत् ज्ञानिसुखं कथं केनप्रकारेणविजानीयामितिव्याख्यानमसत् । यमस्यज्ञानितयातत्सुखस्यप्रत्यक्षत्वेनतज्ज्ञानप्रार्थनायोगात् । तच्छब्देनाव्यवहितपरमसुखभगवद्रूपपरामर्शोपपत्तौव्यवहितज्ञानिसुखग्रहणायोगाच्च । ननुतच्छब्देनभगवद्रूपपरामर्शेपिकथंविजानीयामितिनोपपद्यते । यमस्यभगवज्ज्ञानित्वात् । अन्यथातदुपदेशासंभवात् । नच कथंसाकल्येनजानीयामित्यर्थः । अयोग्यप्रार्थनाप्रसंगादित्यतआह ॥ जानीयामिति ॥ कथमित्याक्षेपे । नकथमपीत्यर्थः । मन्यंतइतिज्ञानोक्तौतत्रभगवत्प्रसादएवमुख्यहेतुर्नान्यइतियमःस्वानुभवेनसमर्थयत्यनेनेतिनासंगतिरितिभावः । तच्छब्दार्थोऽनिर्देश्यंपरमंसुखमिति । दिव्यमितितल्लब्धार्थोक्तिः ॥ द्वितीयाध्यायेद्वितीयावल्ली ॥ २ ॥ २ ॥ पुरमेकादशद्वारं । चक्षुषी श्रोत्रेनासिकेमुखंचेतिसप्तशीर्षण्यानि नाभिरासनंगुह्यंचेतित्रीणि शिरस्येकमितिएकादशद्वारमिदं पुरं शरीरमजस्यजननादिरहितस्यावक्रचेतसोऋजुज्ञानिनोभगवतअधीनमित्य(धि)नुष्ठाय स्थितिंकृत्वानशोचति । शरीराभिमानकृतोहिशोकः । शरीरस्यभगवदधीनत्वस्थितिकरणेतदभिमानाभावान्नशोकइतिभावः । एवंनिरभिमानात्पूर्वमेवविमुक्तोऽपरोक्षज्ञानीपश्चाद्विशेषेणमुच्यते । पुनर्भगवत्स्वरूपमाह । एतदिति॥१॥नित्यंदोषैर्हीनत्वात्हं । साररूपत्वात्सः । हंचासौसश्चेतिहंसः । शुचौवायौसीदतीतिशु

---

भाष्यं ॥ तत्प्रसादमृतेदिव्यमनिर्देश्यंपरंसुखमितिचमहावाराहे ॥ काठकभाष्येद्वितीयाध्यायस्यद्वितीयावल्ली ॥ २ ॥ २ ॥

उप ॥ पुरमेकादशद्वारमजस्यावक्रचेतसः । अ(धि)नुष्ठायनशोचतिविमुक्तश्चविमुच्यते । एतद्वैतत् ॥ १ ॥

चिषत्। वरसुखरूपत्वाद्वसुः। अंतरिक्षेसीदतीतिअंतरिक्षसत्।सर्वेंद्रियादिस्थःसन्निंद्रियविषयादिहोतृत्वाद्धोता। वेद्यांपूज्यतयासीदतीतिवेदिषत्। अतिशयितं थ मन्न मस्यास्तीत्यतिथिः।द्रोणकलशेस्थितःसोमोदुरोणशब्देनोच्यते। तत्रसीदतीतिदुरोणसत्। नृषुस्थितइतिनृषत्। वरेषुदेवेषुसीदतीतिवरसत्।ऋतेवेदेसीदतीतिऋतसत्।व्योमाख्यप्रकृतौसीदतीतिव्योमसत्। अब्जाःअब्जेषुस्थितः। बहुवचनंबहुरूपत्वाभिप्रायेण। गोजाःपृथिवीजन्येषुस्थितः।विष्णुंप्रतिगतत्वात्ऋताःमुक्ताःतेषुनियामकतयाजातत्वादृतजाः। अद्रिजेषुस्थितःअद्रिजाः। वेदैर्मुख्यतःप्रोक्तत्वादृतं। पूर्णगुणत्वाद्बृहत् ॥ २ ॥ किंच यःप्राणरूपंवायुंमुख्यप्राणस्वरूपमूर्ध्वमुन्नयति। अपानंमुख्यवायुरूपमेवप्रत्यगस्यतिअधःक्षिपति। मध्ये हृदयस्येतिशेषः। आसीनं वामनंवामंसौंदर्यंतत्प्रधानत्वात्स्त्रियो वामशब्दशब्दिताः। तन्नेतावामनस्तं विश्वेसर्वेदेवाउपासते ॥ ३ ॥ कांश्चिद्गुणानुक्त्वातूष्णींस्थितंयमंपुनर्विशेषविवित्सयायेयंप्रेतइत्यनेनपृष्टमेवपृच्छतिनचिकेताः ॥ अस्येति॥ शरीरस्थस्यस्थूलशरीरस्थस्यातोविस्रंसमानस्यस्थूलशरीरंत्यजतोदेहिनःसूक्ष्मशरीरवतोदेहात्सूक्ष्मदेहाद्विशेषेणमुच्यमानस्यमुक्तस्यात्रमुक्तौनियामकतयायत्परिशिष्यतेतत्किंकिंलक्षणकं।पुनर्विशेषतोब्रूहीत्यर्थः। उत्तरमाह ॥ एतद्वैतदिति ॥ ४ ॥ सकलजीवनहेतुप्राणापानप्रेरकत्वंभगवतःकथमित्यतस्तयोरपिनजीवनहेतुत्वमित्याह ॥ नप्रा

उप ॥ हंसश्शुचिषद्वसुरंतरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जागोजाऋतजाअद्रिजाऋतंबृहत् ॥ २ ॥ ऊर्ध्वं प्राणमुन्नयत्यपानंप्रत्यगस्यति। मध्येवामनमासीनंविश्वेदेवाउपासते ॥ ३ ॥ अस्यविस्रंसमानस्यशरीरस्थस्यदेहिनः । देहाद्विमुच्यमानस्यकिमत्रपरिशिष्यते। एतद्वैतत् ॥ ४ ॥

णेनेति ॥ तर्हिकेनजीवतीत्यतआह ॥ इतरेणेति ॥ प्राणापानाभ्यांसकलजीवजडेभ्योवेतरेणभगवतैवजीवंतिसर्वेजीवाः । प्रा
णापानयोर्जीवनहेतुत्वाभावेप्रमाणांतरविरोधःस्यादित्यतआह ॥ यस्मिन्निति ॥ जीवनहेतूइतिशेषः । ततश्चस्वातंत्र्येणजीवन
हेतुत्वंप्राक्निषिद्धमितिभावः । यद्वानप्राणेनेत्यत्रस्वातंत्र्येणेतिशेषः । इतरेणेत्वित्यत्रहेतुमाह ॥ यस्मिन्निति ॥ ५ ॥ पुनरपिभ
गवत्स्वरूपंवक्ष्यामीतिप्रतिजानीतेयमः ॥ हंतेति ॥ हंतेत्यास्वादने । अहंतेतुभ्यंइदंगुह्यंगोप्यंसनातनंब्रह्मप्रवक्ष्यामि । कथमा
त्मापरमात्माम्रियतइतिमरणंम्रियमाणंजीवंप्राप्ययथात्मानियामकोभवतितथाप्रवक्ष्यामीत्यर्थः ॥ ६ ॥ एतदेवाह ॥ योनिमि
ति ॥ अन्येकेचित्देहिनोमृताःसंतःशरीरत्वायशरीरवत्त्वायमनुष्यादियोनिंप्रपद्यंते । तन्नियामकतयाभगवानपियोनिंप्रपद्यतइ
तिभावः । अन्येकेचित्स्थाणुंअनुसंयंति । तन्नियामकतयाभगवानपि । केषांचित्योनिप्राप्तिःकेषांचित्स्थाणुप्राप्तिरितिकुतइत्य
तआह ॥ यथेति ॥ तत्तज्ज्ञानकर्मानुसारेणतत्तत्प्राप्तिरितिभावः ॥ ७ ॥ म्रियमाणजीवनियामकस्यशोकमरणादिकंनशंकनीय
मितिभावेनतस्यमाहात्म्यमाह ॥ यइति॥ यःपुरुषःपूर्णषड्गुणःपुरिशयोवा एषुजीवेषु लयादौसुप्तेषुसत्सु तदाकामंकामंस्वेच्छानु
सारेण रथपथादीन् निर्ममाणोजागर्ति तदेवशुक्रंशोकरहितं नत्वन्यत् तदेवब्रह्मपूर्णगुणं तदेवामृतंनित्यमुक्तमुच्यतेश्रुत्यादौ ।

उप ॥ नप्राणेननापानेनमर्त्योजीवतिकश्चन । इतरेणतुजीवंतियस्मिन्नेतावुपाश्रितौ॥ ५ ॥ हंततइदंप्रवक्ष्यामिगुह्यंब्रह्मसनातनं । यथामरणं
प्राप्यात्माभवतिगौतम ॥ ६ ॥ योनिमन्येप्रपद्यंतेशरीरत्वायदेहिनः । स्थाणुमन्येनुसंयंतियथाकर्मयथाश्रुतं ॥ ७ ॥ यएषुसुप्तेषुजागर्तिकामंकामंपु
रुषोनिर्ममाणः । तदेवशुक्रंतद्ब्रह्मतदेवामृतमुच्यते ।

तस्मिन्सर्वेलोकाआश्रिताः । तद्ब्रह्मकोपिनात्येति । यद्वाइतरेणतुजीवंतीत्यत्रब्रह्मणःसर्वजीवेभ्योभेदउक्तः तमेवजीवेश्वरभेदं ज्ञापयितुंतदुभयस्वरूपंवक्ष्यामीतिप्रतिजानीते ॥ हंतेति ॥ अहंतेतुभ्यंइदंगुह्यंसनातनंब्रह्मप्रवक्ष्यामि । आत्माजीवोमरणंप्राप्य यथाभवतितच्चवक्ष्यामि । जीवब्रह्मणोर्भेदज्ञापनायेत्यर्थः । तत्रयःकर्मफलभोक्तासजीवइत्याह ॥ योनिमिति ॥ नहिजीवस्य योन्यादिगमनंब्रह्मप्राप्नोति । अतस्तयोर्भेदइतिभावः । पुनरपिजीवेश्वरस्वरूपमाह ॥ यइति ॥ अनेनसुप्तिमान्जीवः । यस्तेषुसुप्तेषुजागर्तिसविष्णुरिति तयोर्भेदःस्पष्टमुक्तः । शुक्रं शोकरहितं। शुक्रंतच्छोकराहित्यादितिवचनात् । जीवस्तुशोकयुक्तः । तदेवब्रह्मपूर्णंनजीवः । तदेवनित्यमुक्तंजीवस्त्वनेवंविधः । तस्मिन्सर्वेलोकाआश्रिताः नहिजीवेआश्रिताः । तदेवकोपिनात्येति । जीवंतुब्रह्मैवात्येति । अतस्तयोर्भेदःसिद्धइतिभावः । पुनरपिप्रतिजानीते । एतद्वैतदिति॥८॥तमेवजीवेश्वरभेदंसदृष्टांतमाहउत्तरमंत्रद्वयेन ॥ अग्निरिति ॥ यथायद्यपिअग्निर्देवतारूपएकएवभुवनंलोकंप्रविष्टःसन्पाकादिकर्तानान्योस्ति । तथाप्यस्याग्नेर्देवस्यरूपंरूपंप्रत्यचेतनोग्निःप्रतिरूपःप्रतिबिंबोबभूव । तथासएकएवसर्वभूतानांजीवानामंतरात्मातन्नियामकः तथापितस्यरूपंरूपं प्रतिजीवःप्रतिबिंबोबभूव । नचाबिंबप्रतिबिंबत्वोक्त्याऽभेदः । बहिश्चासौ परमात्मनःनितरांभिन्नइतियावत् । परतंत्रत्वा

उप ॥ तस्मिँल्लोकाश्श्रितास्सर्वेतदुनात्येतिकश्चन । एतद्वैतत् ॥ ८ ॥ अग्निर्यथैकोभुवनंप्रविष्टोरूपंरूपंप्रतिरूपोबभूव । एकस्तथासर्वभूतांतरात्मारूपंरूपंप्रतिरूपोबहिश्च ॥ ९ ॥

दितिभावः ॥ ९ ॥ यथायद्यपिवायुर्देवतारूपएकएवभुवनंप्रविष्टःसन्धारकोनान्योस्ति । तथाप्यस्यवायोर्देवस्यरूपंरूपंप्रति अचेतनोवायुःप्रतिरूपोबभूव। इतरत्समानं॥ १० ॥ ननुभूतांतरात्मेतिसर्वजीवांतरत्वमुक्तं । तथासतिजीववत्दुःखंस्यादित्यत आह ॥ सूर्यइति ॥ यथासूर्यःसर्वलोकस्यांतश्चक्षुरपि चक्षुरभिमानिदेवतापीतियावत्। चाक्षुषैर्बाह्यदोषैरचेतनरूपबाह्यचक्षुर्गतैर्दोषैर्नलिप्यते । तथासएकएवसर्वभूतांतरात्मापिलोकस्यदुःखेननलिप्यते । ननुसर्वजीवात्मकत्वेचकथंदुःखेनालेपइत्यतउक्तं ॥ बाह्यइति ॥ जीवेभ्योभिन्नइत्यर्थः। स्वतंत्रत्वादितिभावः ॥ ११ ॥ ननुभूतांतरात्माभूतदुःखेननलिप्यतइतिकथं । अन्यथाजीवस्यापितदभावप्रसंगात्। नहिदह्यमानगेहांतर्गतयोरन्यतरस्यैवदाहइतियुक्तमिति । अतोजीवापेक्षयेश्वरस्यसामर्थ्यवैशेष्येणाग्निस्तंभनवतोदाहाभाववत्दुःखालेपोपपत्तिरितिभावेनेश्वरसामर्थ्यमाह ॥ एकइत्यादिना ॥ यःसर्वभूतान्तरात्माएकःसमाभ्यधिकरहितः सर्वमस्यवशेवर्ततइतिवशी। एकंस्वात्मरूपंबहुधाकरोति। नियम्यानंत्यात्। तमात्मनितिष्ठतीतिआत्मस्थंभगवंतं येधीराअनुपश्यंति तेषामेवशाश्वतंनित्यमभिव्यक्तंसुखं नेतरेषां ॥ १२ ॥ किंचयोनित्यानांनित्यःपरमनित्यः। अनित्यत्वादिचतुर्विधनाशरहितइतियावत्। नित्यानांनित्यत्वप्रदोवा। चेतनानांचेतनःपरमचेतनः। चेतनानांचेतनत्वप्रदोवा। यश्चस्वयमेकएवबहूनांपुरुषाणांकामान्काम्यान्विदधाति तमात्मस्थंयेनुपश्यंतिधीरास्तेषामेव शाश्वतीपुनरावृत्तिशून्या शांतिर्मोक्षोनेतरेषां।

---

उप ॥ वायुर्यथैकोभुवनंप्रविष्टोरूपंरूपंप्रतिरूपोबभूव । एकस्तथासर्वभूतांतरात्मारूपंरूपंप्रतिरूपोबहिश्च ॥ १० ॥ सूर्योयथासर्वलोकस्यचक्षुर्नलिप्यतेचाक्षुषैर्बाह्यदोषैः। एकस्तथासर्वभूतांतरात्मानलिप्यतेलोकदुःखेनबाह्यः ॥ ११ ॥ एकोवशीसर्वभूतांतरात्माएकंरूपंबहुधायःकरोति । तमात्मस्थंयेनुपश्यंतिधीरास्तेषांसुखंशाश्वतंनेतरेषां ॥ १२ ॥ नित्योनित्यानांचेतनश्चेतनानामेकोबहूनांयोविदधातिकामान्।

मोक्षःशांतिश्चशरणंनिर्वाणंचाभिधीयतइतिब्राह्मे ॥ १२ ॥ एवंयज्ज्ञानाच्छाश्वतसुखादिरूपोमोक्षस्तस्यकथंदुःखलेपःस्यादित्युक्तं । इदानींपरमसुखरूपत्वाच्चनतत्प्राप्तिरितिभावेनप्रकृतभगवत्स्वरूपमेवाह ॥ तदिति ॥ तद्रूपंरूपमित्यत्रप्रकृतं एतत्एकंरूपमितिप्रकृतं भगवद्रूपमनिर्देश्यंसाकल्येननिर्देष्टुमशक्यं परमंसुखमितिमन्यंतेज्ञानिनः । तज्ज्ञानेचभगवत्प्रसादएवमुख्यहेतुरितिस्वानुभवेनसमर्थयतेयमः ॥ कथमिति ॥ अहं तदनिर्देश्यंपरमंसुखंभगवद्रूपंतत्प्रसादमृतेइदानींकथंविजानीयां नकथमपि । अतोभगवत्प्रसादएवतत्रहेतुरितिभावः । भगवत्प्रसादादपिकिंसाकल्येनतज्ज्ञानंभवतीतिनचिकेताःपृच्छति ॥ किमुभातीति ॥ किंसम्यगितिशेषः । उत्तरमाह नभातिवेति । सम्यक्नभात्येवेत्यर्थः ॥ १४ ॥ तत्कुतइत्यतस्तस्यसूर्याद्यप्रकाश्यत्वादित्याह ॥ नतत्रेति ॥ तत्र तत् । भाति भासयते । चंद्रतारकमितिद्वंद्वैकवद्भावः । नतद्भासयतेसूर्योनशशांकोनपावकइतिस्मृतिः । नकेवलंसूर्यादीनांभगवत्स्वरूपप्रकाशकत्वाभावः । किंतुघटादिप्रकाशनेपिनस्वातंत्र्यमित्याह ॥ तमेवेति ॥ सर्वं सूर्यादितेजो भांतं प्रकाशयंतंतमेव भगवंतमनुभाति प्रकाशते । सूर्यादिप्रकाशोपिभगवदधीनइतिभावः । तथाहिस्मृतिः । यदादित्यगतंतेजोजगद्भासयतइत्यादिका । तर्हिकस्यप्रकाशेनेदंसर्वंजगत्प्रकाशतइत्यतआह ॥ तस्येति ॥ १५ ॥ इतिद्वितीया

---

उप ॥ तमात्मस्थंयेनुपश्यंतिधीरास्तेषांशांतिश्शाश्वतीनेतरेषां ॥ १३ ॥ तदेतदितिमन्यंतेऽनिर्देश्यंपरमंसुखं । कथंनुतद्विजानीयांकिमुभाति नभातिवा ॥ १४ ॥ नतत्रसूर्योभातिनचंद्रतारकंनेमाविद्युतोभांतिकुतोयमग्निः । तमेवभांतमनुभातिसर्वंतस्यभासासर्वमिदंविभाति ॥ १५ ॥ इति द्वितीयावल्ली ॥ २ ॥ २ ॥

ध्यायस्यद्वितीयावल्ली ॥ २ ॥ २ ॥ पुनरपिभगवन्माहात्म्यमाह ऊर्ध्वमूलइत्यादिना । तदन्यथाप्रतीतिनिरासायप्रमाणेनैव व्याचक्षाणस्तावदूर्ध्वमूलइत्येतद्व्याचष्टे ॥ सर्वोच्चइति ॥ ऊर्ध्वशब्दार्थः सर्वोच्चइति । उच्चऊर्ध्वउच्यते । सर्वेत्यस्ययोग्यतयासंबंधः । वृक्षमूलवन्मूलत्वेन्याश्रयत्वशंकास्यादित्यतो भूमिवदित्युक्तं । एषोश्वत्थइतिप्रसिद्धाश्वत्थउच्यतइतिप्रतीतिनिरासाय जगदाख्यस्येत्युक्तं । अर्वाक्शाखइत्येतद्व्याचष्टे ॥ शाखाइति ॥ यदिभूमिरिवविष्णुर्मूलंतर्हिवृक्षमूलंकिमित्यतआह ॥ वृक्षमूलमिति ॥ अनेनोर्ध्वमूलइत्येतत्प्रकारांतरेणव्याख्यातं । ननुवृक्षमात्रसाम्यमभिदधताअश्वत्थत्वंकथमस्योच्यतइत्यतआह ॥ सइति ॥ आशुशब्दोपपदात्वागतिगंधनयोरित्यस्मात्कः । उपपदोकारलोपआकारस्यह्रस्वत्वंछांदसमितिभावः । अस्तुहरिरश्वनामकःकिंततइत्यतआह ॥ तद्व्यासत्वादिति ॥ अश्वोस्मिंस्तिष्ठतीत्यश्वत्थ इत्यर्थः ॥ तदन्नत्वादिति ॥ अश्वस्यथमन्नमश्वत्थं । अन्नंथमितिश्रुतेः । लिंगव्यत्यासःछांदसः । जगत्स्वरूपस्यैवानादिनित्यत्वमुच्यतइतिप्रतीतिनिरासायसनातनपदंव्याचष्टे ॥ प्रवाहतइति ॥ तुशब्दएवार्थः । अश्वत्थत्वसमुच्चयार्थश्चशब्दः । नित्यत्वसमुच्चयार्थोवा । ननुमुख्यतएवानादिनित्यत्वंकिंनस्यादित्याशंकांपरिहर्तुंतदेवामृतमुच्यतइतिवाक्यंव्याचष्टे ॥ मुख्यतइति ॥ उच्यतइतिशेषः । श्रुतावुच्यतइत्युक्तत्वात् । तुशब्दोवधारणार्थः । हरिरेवेतिसंबंधः । अन्यस्याप्यमृतत्वात्तदेवामृतमुच्यतइतिकथमुक्तमित्यतोमुख्यतइति

भाष्यं ॥ ओं । सर्वोच्चोभगवान्विष्णुर्मूलंभूमिवदस्यतु । जगदाख्यस्यवृक्षस्यशाखादेवास्ततोवमाः । वृक्षमूलंरमादेवीसोश्वआशुगतेर्हरिः । तद्व्याप्तत्वात्तदन्नत्वादश्वत्थोयंप्रकीर्तितः । प्रवाहतस्त्वनादिश्चमुख्यतस्त्वमृतोहरिः ।

शेषोक्तिः । ननुहरिरेवमुख्यतोऽमृतइत्युक्तत्वेपितस्यमुख्यामृतत्वंकुतः । नह्युक्तमस्तीतिनियमोस्तीत्यतआह ॥ मुख्येति ॥ यतोमुख्यतोहरिरेवामृतउच्यतेश्रुत्यादावतःसएकएवमुख्यामृतइतिव्याख्येयं । उक्तमस्तीतिनियमाभावेपिश्रुत्याद्युक्तमस्तीति नियमोस्तीतिभावःकिंततइत्यतआह ॥ जगदिति ॥ यतःसएकएवमुख्यामृतस्ततोजगत्प्रवाहतएवनित्यं । न मुख्यतः । अवधारणविरोधादित्यर्थः । यदिदंकिंचजगत्सर्वंप्राणएजतिनिःसृतमितिवाक्येमुख्यप्राणस्यसर्वजगच्चेष्टकत्वादिकमुच्यतइत्यसत् । अस्यपितृसौमनस्यादित्रयाणामेवप्रश्नेतदनुपन्यासेनमुख्यप्राणकथनस्यासंगतत्वात् । अतएवमहद्भयमित्युत्तरवाक्येवज्रशब्दादुद्यतत्वलिंगाच्चेंद्रायुधमेवोच्यतेइत्यप्ययुक्तमितिभावेनतद्वाक्यद्वयंव्याचष्टे ॥ प्राणाख्यइति ॥ निमित्तसप्तमीयं । तुशब्दोवधारणार्थः । नतुमुख्यप्राणइत्यर्थः । चशब्दोप्यवधारणार्थः । निःसृतंचेतिवाचशब्दसंबंधः । अस्मादितिश्रुतौशेषोक्तिः । वज्रवद्भयदमित्यनेनवज्रशब्दोगौण्यावृत्त्याविष्णावपिसावकाशइत्युक्तंभवति । अतएवश्रुतौमहद्भयमित्यनेनवज्रशब्दप्रवृत्तिनिमित्तगुणयोगोदर्शितः । सूत्रभाष्येतुवर्जनाद्वज्रमुच्यतइतिवज्रशब्दोयौगिकइत्युक्तं । स्वधर्मस्येत्यादिशेषोक्तिः । चशब्देनोद्यमित्वेनोद्यतंचेतिग्राह्यं । भयदमित्यस्ययेविदुरमृतास्तेभवंतीतिश्रुत्यासंबंधः । अनेनप्रसिद्धवज्रज्ञानान्मोक्षायोगेननतत्परत्वमुपपन्नमित्युक्तंभवति । यद्वावज्रवद्भयदमित्यनेनश्रुतौमहद्भयमित्युक्तभयप्रदत्वेवज्रमुद्यतमितिलुप्तोपमोच्यतइतिव्याख्यातमितिप्रतिभाति । अस्मिन्पक्षेवज्रमुद्यतमित्येतत्प्रसिद्धवज्रपरमेव । तथापिवाक्यस्यभगवत्परत्वाविरोधात् । यद्यपितत्वप्रकाशि

भाष्यं ॥ मुख्यामृतस्सएवैकोजगन्नित्यंप्रवाहतः । प्राणाख्येतुहरौसर्वमेजत्यस्मात्तुनिस्सृतं । वज्रवद्भयदंचैवस्वधर्मस्यातिलंघने ।

कायांकंपनादितिसूत्रभाष्याद्यनुरोधेनयदिदंकिंचेत्यादिअमृतास्तेभवतीत्यंतमेकवाक्यंकृत्वाव्याख्यातं । तथापिव्याख्यानांतर मेतदित्यविरोधः । यथादर्शेतथात्मनीत्येतदन्यथाप्रतीतेःकिंचिदध्याहारेणव्याचष्टे ॥ **जीवइति**॥आत्मनीत्यस्यार्थो जीवइति। स्थितोभगवानितिशेषोक्तिः । सम्यकूदृश्यतइतिसंबंधः । अनेनश्रुतौपरिदृश्यतइत्यस्यैवपूर्वत्रापिसंबंधइत्युक्तंभवति । अनुपलं भबाधपरिहारायज्ञानदृष्टिभिरित्युक्तं । ऋषिभिरित्यर्थः । ऋषयोंतःप्रकाशाइतिश्रुतेः । मुखवदित्युक्त्याश्रुतौमुखमितिशेषइति सूचितं । यथास्वप्नेतथापितृलोकेइत्यस्यतात्पर्यमाह ॥ **नतथेति** ॥ अतएवयथास्वप्नेइतिदृष्टांतः । स्वाप्नपदार्थस्यादर्शस्थमुख वत्स्पष्टमप्रतिभानादितिभावः । नतथासम्यकूदृश्यतइत्यनेनश्रुतौदृश्यतइत्यस्यैवात्रसंबंधइतिसूचितं । यथाप्सुपरीवदृश्यतइत्ये तद्व्याचष्टे ॥ **ततइति** ॥ अनेनइवशब्दोल्पार्थइत्युक्तंभवति । अतएवाप्स्वितिदृष्टांतः । वारिस्थप्रतिबिंबस्यस्वाप्नपदार्थापेक्षया स्पष्टत्वात् । आदर्शमुखापेक्षयाचास्पष्टत्वात् । गंधर्वलोकेस्थितइतिशेषोक्तिः । उत्तमगंधर्वापेक्षयैतत् । तेनपित्रपेक्षयागंधर्वा णांनीचत्वोक्त्यानविरोधः । छायातपयोरितितयोरेवोपादानाभिप्रायंवदंस्तद्वाक्यंव्याचष्टे ॥ **नात्यातपइति** ॥ अत्यातपेवस्तु स्पष्टंनदृश्यते । तेनदृष्टिप्रतिहतेः । नाप्यतिच्छायायां । विषयसंस्कारकालोकाभावात् । किंतुयथैवाहनिच्छायातपयोःस्पष्टंदृ श्यतइत्यर्थः । नन्विंद्रियेभ्यःपराह्यर्थाइत्यादिनादेवतातारतम्यपुरःसरंभगवत्सर्वोत्तमत्वस्योक्तत्वात्पुनरिंद्रियेभ्यःपरंमनइत्यादि

---

भाष्यं ॥ जीवेस्थितस्तुभगवान्दृश्यतेज्ञानदृष्टिभिः । आदर्शेमुखवत्सम्यङ्नतथापितृलोकगः । ततःकिंचित्स्पष्टतयागांधर्वेदृश्यतेहरिः । नात्यातपेनच्छायायांयथैवाहनिदृश्यते । स्पष्टंतथाब्रह्मलोकेदृश्यतेपुरुषोत्तमइतिच ।

किमर्थमुच्यतइत्यतआह ॥ **पुनरिति** ॥ ज्ञानपूर्वकं ज्ञापनपूर्वकं । ज्ञाने ज्ञापने । सर्वव्यक्तिष्वभिव्यक्त्यैतात्पर्याधिक्यवित्त्ये । पुनर्वचनमुद्दिष्टंशतशोथपृथक्पृथगितिवचनात्पुनर्वचनंमहातात्पर्यज्ञापकमितिभावः । स्यादेतत् । यदिसर्ववेदवाक्यानांदेवतातारतम्यज्ञापनपूर्वंभगवतःसर्वोत्तमत्वज्ञापनेमहातात्पर्यमित्येतदेवस्यात् । तदेवकुतइत्यतस्तत्रप्रमाणमाह ॥ **तारतम्येति** ॥ नसंदृशेतिष्ठतिरूपमस्येतिभगवद्रूपस्येंद्रियागोचरत्वमुच्यते । तदयुक्तं । मत्स्यादेश्चक्षुरादिगोचरत्वादित्यतस्तदभिप्रायंप्रमाणेनाह ॥ **प्रादुर्भावानिति** ॥ तर्हिचक्षुरादिजन्यमत्स्याद्यवतारज्ञानेनैवमोक्षोपपत्तौहृदेत्युक्तभक्त्यादिवैयर्थ्यंस्यात् । नचनावतारज्ञानंमोक्षसाधनं किंतुस्वहृदिस्थस्यवा व्याप्तस्यवा भगवतोज्ञानमेवेतियुक्तं । दृष्टैवह्यवताराणांमुच्यंतेकेचिदंजसेत्युक्तेरवतारज्ञानेनापिकेषांचिन्मोक्षसद्भावादित्यतआह ॥ **प्रादुर्भावानपीति** ॥ योगीत्यधिकारिविशेषपरं । ज्ञानदृष्ट्याहृद्युपासनेनेत्यर्थः । हृद्युपासाजन्यापरोक्षज्ञानेनेतिवार्थः । यदापश्यतिविषयीकरोतीतिव्याख्येयं । उक्तंच येषांबहिरुपासनेनमोक्षःतेषामपिहृद्युपासनंकिंचित्कार्यमेवेति । अनेनहृदामनीषेत्यादेस्तात्पर्यमुक्तं । यथाचैतत्तथावक्ष्यते । एवकारव्यावर्त्यमाह ॥ **नेति** ॥ इंद्रियैर्दृष्टैःप्रादुर्भावैःक्वापिनमुच्यतइत्यर्थः । दृष्टेरितिपाठेइंद्रियैर्यादृष्टिर्जायतेतस्याःसकाशान्नमुच्यतइत्यर्थः । योगोहिप्रभवा

---

भाष्यं ॥ पुनरिंद्रियेभ्यःपरंमनइत्यादिदेवतातारतम्यज्ञानपूर्वकंभगवतस्सर्वोत्तमत्वज्ञानएवसर्ववाक्यानांमहातात्पर्यमितिज्ञापयितुं । तारतम्यपरिज्ञानपूर्वकंसर्वतोहरेः । आधिक्येसर्ववाक्यानांतात्पर्यमहदिष्यतइतिच । प्रादुर्भावानृतेविष्णुमिंद्रियैर्नैवपश्यति । प्रादुर्भावानपियदाज्ञानदृष्ट्यैवपश्यति । तदेवमुच्यतेयोगीन(दृष्टे)दृष्टैरिंद्रियैःक्वचिदितिच । ॥ ५१ ॥

प्ययावितिसामानाधिकरण्येनोत्पत्तिविनाशावेवयोगइतिप्रतीयते तदसत् । प्रपंचनिष्ठोत्पत्तिविनाशयोःमुमुक्षुनिष्ठयोगरूपत्वासंभवात् । नचानेनयोगउत्पत्तिविनाशधर्मकइत्युच्यतइतिवाच्यं । प्रभवाप्ययशब्दस्यतद्वतिलक्षणाप्रसंगात् । अनुपयुक्तत्वेनावक्तव्यत्वाच्चेत्यतस्तद्व्याचष्टे ॥ प्रभवाप्ययाविति ॥ प्रतियोगेद्वितीयेतिभावः । ननुप्रपंचनिष्ठप्रभवाप्ययौप्रतिकथमिंद्रियधारणारूपोयोगः । भगवंतंप्रत्येवतस्यकर्तव्यत्वादित्यतआह ॥ भगवतइति ॥ अस्तित्वस्यसर्वसाधारणत्वादस्तीत्येवोपलब्धव्यइतिकथमुच्यते । नचदेहाद्यतिरिक्तआत्मास्तिनवेतिपृष्टत्वेनतन्निरासायात्मादेहाद्यतिरिक्तोस्तीत्येवोपलब्धव्यइत्युच्यतइतिवाच्यं । तृतीयप्रश्नस्योक्तरीत्याभगवन्मात्रपरत्वेनमरणानंतरंजीवोस्तिनवेत्येवंपरत्वाभावात् । देहाद्यतिरिक्तइत्यश्रुतकल्पनापाताच्चेतिभावेनप्रमाणेनैवव्याचष्टे ॥ अधिकइति ॥ अकारआधिक्यवाची । अस्तीत्येतत्सत्तायुक्तवस्तुवाचीतिभावः । चशब्दोयस्मादित्यर्थे । यस्मादेवमस्तीतिनामकस्तस्मात् । ननुकिमर्थमस्तीत्येवोपलब्धव्यइत्यतःएवंभगवतःसर्वाधिक्यज्ञानवतएवभवद्याथात्म्यज्ञानसंभवात् । अन्यस्यतदभावादित्याह ॥ अनाधिक्यमिति ॥ जानतांसकाशात् । तेनास्तीतिब्रुवतोन्यत्रेत्येतद्व्याख्यातं । तत्वभावेनचोभयोरित्येतदन्वयाप्रतीतिनिरासायव्याचष्टे ॥ प्रकृतेरिति ॥ प्रकृतेःपुरुषाणांचेत्यनेनोभयोरित्येत

भाष्यं ॥ प्रभवाप्ययौप्रतिहियोगः । भगवतस्सकाशात्प्रभवाप्ययौ । अधिकस्सतोयंभगवांत्सर्वस्मादपिकेशवः । अस्तीतिनामकस्तस्माज्ज्ञातव्यस्सतथैवच । अनाधिक्यंजानतांतुकथंसउपलभ्यते । प्रकृतेःपुरुषाणांचतत्त्वंभावयतिस्फुटं ।

त्प्रकृतिपुरुषयोरितिव्याख्यातं । तत्वंयाथात्म्यं भावयति उत्पादयति । ननुयदितत्वभावोविष्णुस्तदातत्वभावेनास्तीत्येवोपलब्धव्यइतिकथं । विष्णोःसर्वसाधारण्येनसर्वेषामपिसदाधिक्यज्ञानप्रसंगादित्यतस्तदभिप्रायमाह ॥ **तत्प्रसादादिति** ॥ तुशब्दोवधारणार्थः । तेनचशब्दोव्याख्यातः । प्रसादश्चनसर्वसाधारणइतिभावः । अस्तीत्येवोपलब्धस्येत्येतद्व्याचष्टे ॥ **प्रसादश्चेति** ॥ तथाविदोभगवदाधिक्यविदः । ननुपूर्वंप्रसादोभगवदाधिक्यज्ञानसाधनमित्युक्तं । इदानींज्ञानंप्रसादसाधनमित्युच्यते । अतोन्योन्याश्रयइत्यतोव्यक्तिभेदान्नान्योन्याश्रयइतिभावेनाह ॥ **अनादीति** ॥ पुनःपुनर्वृद्धिमेति प्रसादद्वारा । नन्वनादिकालादारभ्येतिकिमर्थंवक्तव्यं । पूर्वमाधिक्यज्ञानरहितस्यापिभगवत्प्रसादात्पश्चात्तज्ज्ञानंभवतीत्येवकिंनस्यादित्यतआह ॥ **येषामिति** ॥ पश्चाज्जायमानंप्रतिभगवत्प्रसादोहेतुः । सचभगवदाधिक्यज्ञानसाध्यइतिपूर्वमपितत्सद्भावोपेक्षितः । एवंतदपिज्ञानंभगवत्प्रसादसाध्यमित्यनादित्वमाश्रयणीयमितिभावः । ननुकेषांचिद्योग्यानांपूर्वंभगवदाधिक्यज्ञानानुपलंभेपिपश्चात्तद्दर्शनात्कथमेतदित्यतआह ॥ **अभिभूतमिति** ॥ अभिभवकृतोनुपलंभइतिभावः । यदासर्वेप्रमुच्यंतेकामाइत्यत्रसर्वकामत्यागउच्यतइतिप्रतीतिनिरासायमंत्रप्रमाणेनैवव्याचष्टे ॥ **अंतःकरणेति** ॥ अतएवश्रुतौहृदिस्थिताइतिविशेषणं । अन्यथातद्व्यर्थंस्यादिति

भाष्यं ॥ तत्वभावस्ततोविष्णुस्तत्प्रसादात्तुतस्यहि । आधिक्यंज्ञायतेसत्तःप्रसादश्चतथाविदः । अनादिकालादाधिक्यंसर्वस्माज्जानतोहरेः । पुनःपुनर्वृद्धिमेतितज्ज्ञानंहिभवेभवे । येषामाधिक्यविज्ञानंनैवपूर्वंहरेर्भवेत् । तेषांपश्चाच्चनैवस्यादभिभूतंतुतत्पुनः । व्यंजकाव्यक्तिमभ्येतितस्मात्तज्ज्ञानमुत्तममितिच । अंतःकरणकामानांत्यागोव्यक्तिश्चिदात्मनां ।

भावः । ननुसर्वात्मनाकामत्यागएवश्रुत्यर्थःकिंनस्यात् । विशेषणस्यस्वरूपकथनपरत्वोपपत्तेरित्यतआह ॥ व्यक्तिरिति ॥ चिदात्मनांत्वित्यन्वयः । मुक्तौचिदात्मककामव्यक्तिसद्भावात्सर्वकामत्यागस्यश्रुत्यर्थत्वेबाधःस्यादित्युक्तएवश्रुत्यर्थइतिभावः । अथमर्त्योमृतोभवतीत्येतद्व्याचष्टे ॥ तदेति ॥ अथशब्दार्थस्तदेति । अमृतोभवतीत्यस्यार्थोमृतिंनैवाभियास्यतीति । यदांसर्वेप्र भिद्यंतइतिमंत्रंव्याचष्टे ॥ मिथ्याज्ञानेति ॥ अनुशासनं वेदांतोपदेशः एतावत् एतावन्मात्रं । नत्वधिकमस्तीत्याशंकनीयमि तिव्याख्यानमसत् । वेदांतोपदेशस्यैतावन्मात्रत्वेइतरवेदांतप्रवृत्तिवैयर्थ्यादितिभावेनैतावदनुशासनमित्येतद्व्याचष्टे ॥ तदर्थ मिति ॥ मिथ्याज्ञानग्रंथिनिरासार्थंअनुशासनं । निष्कामकर्मश्रवणमनननिदिध्यासनकर्तव्यताप्रतिपादकंशास्त्रमित्यर्थः । यदुक्तंतृतीयप्रश्नपरिहारौभगवद्विषयाविति तदयुक्तं । तंस्वादितिउपसंहारवाक्येतंस्वात् आत्मीयाच्छरीरात्प्रवृहेत् पृथक्कुर्यादि त्युक्तत्वेनपूर्वमपिदेहभिन्नात्मस्वरूपमेवप्रश्नपरिहारविषयइत्यंगीकारौचित्यादित्यतस्तत्प्रमाणेनैवव्याख्यातुंतावच्छरीरशब्दार्थ माह ॥ शरीरभूतइति ॥ विष्णोर्भिन्नदेहाभावात्विष्णुभिन्नोजीवःकथंशरीरभूतइत्यतउक्तं ॥ तद्वशगइति ॥ यद्वाविष्णो रभिमानाभावात्कथंतच्छरीरभूतोजीवइत्यतउक्तं । तद्वशगइति । प्रसिद्धशरीरवत्तद्वशगत्वादधिष्ठानत्वगुणयोगेनैवजीवःश रीरशब्दोक्तइतिभावः । एवंशरीरशब्दार्थमुक्त्वातद्वाक्यतात्पर्यमाह ॥ विजानीयादिति ॥ ततोजीवात् । कथमिदंतात्पर्य

---

भाष्यं ॥ कामानांतुतदामुक्तौमृतिंनैवाभियास्यति । मिथ्याज्ञानग्रंथिभिस्तुनितरांमुच्यतेयदा । तदामृतत्वमेवैतितदर्थंचानुशासनं । शरी रभूतोविष्णोस्तुजीवस्तद्वशगोयतः । अधिष्ठितश्चतेनैवविजानीयात्पृथक्ततः ।

मनेनलब्धमित्यतस्तद्व्याचष्टे॥स्वाख्यादिति॥प्रवृहेदित्यस्य पृथक्करणार्थत्वादनादितःपृथग्भूतस्येदानीं पृथक्करणायोगात्पृथक्कुवि जानीयादितितात्पर्यमुक्तमितिभावः । जीवस्यभगवदधिष्ठितत्वतद्वशत्वाभ्यांभगवच्छरीरत्वेश्रुतिंचाह॥यस्येति॥यआत्मनितिष्ठन्नितिपूर्ववाक्यमप्युदाहर्तव्यं । आत्मा जीवः । एषतआत्मांतर्याम्यमृतइत्युत्तरेणान्वयः । तंस्वाच्छरीरात्प्रवृहेदित्यत्रजीवाद्भगवतएवभेदोभिधीयतइत्यत्रयुक्तिंचाह ॥ जनानामिति ॥ पूर्ववाक्येजनानांहृदयेसन्निविष्टइतिजनशब्दवाच्यजीवेभ्यस्तद्धृदयसंनिविष्टस्यभगवतएवभेदस्योक्तत्वादत्रापिजीवात्पृथग्घरिरित्येवोच्यते । नतुप्रसिद्धशरीराज्जीवःपृथगितिसिद्धमितिभावः । ननुजनानांहृदयेसन्निविष्टइत्युक्तत्वेपिकथंजीवाद्भगवतोभेदसिद्धिः। जीवस्यापिहृदयसंनिविष्टत्वोपपत्तेरितिचेन्न।जनानांहृदयेसन्निविष्टइतिहिजीवस्वरूपभूतहृदयस्थत्वमुच्यते।जनशब्दःस्वतोजीवेक्वचिदेहेचवर्ततइतिवचनेनजनशब्दस्यजीवदेहोभयपरत्वात्। नचतज्जीवस्योपपद्यते । जीवस्यदेहहृदयस्थत्वेपिस्वहृदिस्थत्वाभावात् । नन्वेवंतर्हिअंगुष्ठमात्रत्वोक्तिविरोधःस्यात् । नहिजीवहृद्गतस्यांगुष्ठमात्रत्वंयुज्यते । जीवस्यैवाणुत्वेनांगुष्ठपरिमाणकत्वाभावादितिचेन्न। स्यादेवं।यद्यत्रजीवहृद्गतस्यदेहांगुष्ठपरिमाणकत्वमुच्यते।नचैवं ।किंतुजीवांगुष्ठपरिमाणकत्वमेवातोनविरोधइतिभावेनतत्रप्रमाणमाह॥देहेति॥ देहेहृदीतिसंबंधः।जीवस्यहृदीत्यन्वयः । नन्वस्त्वस्मिन्वाक्येभगवतएवभेदोभिधीयतइति । किंतुस्वाच्छरीरादित्युक्तसंसारिशरीरादेव । नतुजीवादितिकिंन

भाष्यं ॥ स्वाख्याच्छरीराज्जीवात्तुप्रवृहेद्विष्णुमव्ययमितिच । यस्यात्माशरीरं । यआत्मानमंतरोयमयतीतिच । जनानांहृदयइत्युक्तत्वाच्च जीवात्पृथग्घरिरितिसिद्धं । देहांगुष्ठमितोदेहेजीवांगुष्ठमितोहृदि । जीवस्यसतुविज्ञेयोजीवाद्भेदेनमुक्तयइतिच ।

स्यात् । शरीरशब्दस्यशरीरेमुख्यत्वात् जीवेगौणत्वात् । नहिमुख्येसंभवत्यमुख्यार्थांगीकारेकारणमस्तीत्यतआह ॥ संसारीति ॥ सत्यंशरीरशब्दःशरीरेमुख्यइति । तथाप्यत्रतदनंगीकारोयुक्तः । संसारिशरीरेणभगवतोऽभेदस्यकेनापिवादिनानंगीकृतत्वेनतद्भेदप्रतिपादनस्याप्रसक्तप्रतिषेधत्वापातात् । अतोमुख्यार्थग्रहणेबाधकसद्भावादमुख्यार्थांगीकारोयुक्तइतिभावः । ननुवादिनानंगीकृतोपिभगवतःसंसारिशरीराभेदोलोकसिद्धोभवत्येव । तथाहि । जीवेतावद्भगवदसाधारणधर्मस्यस्वातंत्र्यादेरध्यासोस्ति । एवंचभगवतःसंसारिशरीराभेदोलोकभ्रांतिसिद्धस्तंस्वाच्छरीरादितिश्रुत्यानिषिध्यतइतिकिंनस्यादित्यतआह ॥ नचेति ॥ भगवतःसंसारिशरीराभेदइतिशेषः । कुतइत्यतआह ॥ जनानामिति ॥ सत्यमस्तिभगवतःसंसारिशरीराभेदोलोकसिद्धः । तथापिनासावत्रनिषिध्यते । जनानांहृदयइतिपूर्ववाक्यएवभगवतोजीवदेहहृद्गतत्वोक्त्यासंसारिशरीरभेदस्योक्तत्वेनतन्निषेधस्यजातत्वात् । अत्रापितन्निषेधेपुनरुक्त्यापातादितिभावः । अभ्युपेत्यचेदमुदितं । जीवेभगवद्धर्मस्वातंत्र्याद्यध्याससद्भावेपिशरीराभेदाध्यासाभावस्यान्यत्रोक्तत्वेनभगवतिसंसारिशरीराभेदस्यलोकसिद्धत्वाभावादितिमंतव्यं । भगवतःसंसारिशरीराभेदोवादिनानंगीकृतोपिलोकसिद्धोनिषिध्यतइतिकिंनस्यादित्यतआह ॥ नचेति ॥ भगवतोजीवाद्भेदेजनानांहृदयेसंनिविष्टइत्युक्तामुपपत्तिंस्फुटयति । जनानामिति । जनानांहृदयेनिविष्टइतिषष्ठ्यानिविष्टस्यभगवतोजीवाद्भेदप्रतीतेरित्यर्थइत्यप्याहुः । ननुमास्तुतंस्वादित्यत्रभगवतःसंसारिशरीराद्भेदउच्यतइति । तथापिजीवस्यैवशरीराद्भेदउच्यतइतिकिंनस्यात् । जीवेश्वरशरी

भाष्यं ॥ संसारिशरीरेणाभेदोवादिनाकेनापिनांगीकृतः । नचलोकसिद्धः । जनानामितिभेदात् ।

राभेदस्यचार्वाकादिभिरंगीकारात् । एवंचशरीरशब्दमुख्यार्थात्यागोपीतिचेन्न । तंस्वादितिशब्देनपूर्वार्धप्रकृतस्यैवपरामर्शात् । नचपूर्वार्धप्रकृतोजीवः । तत्रांगुष्ठमात्रइत्यंगुष्ठमात्रत्वोक्तेः । नचजीवेतद्युक्तं । तस्यअणुपरिमाणत्वेनदेहांगुष्ठमितत्वस्यस्वांगुष्ठमितत्वस्यचासंभवादितिभावेनाह ॥ नजीवइति ॥ सर्वगतस्यापिविष्णोरंगुष्ठमात्रत्वंहृद्यपेक्षयातुमनुष्याधिकारत्वादितिसूत्रकृतोपपादितमनुसंधेयं । तंस्वाच्छरीरादितिवाक्यव्याख्यानमुपसंहरति ॥ अतइति ॥ उक्तरीत्यार्थांतरस्यासंभवादित्यर्थः । तंस्वाच्छरीरादित्यत्रेतिशेषः । इदानीमशेषोपनिषदर्थमुपसंहरति ॥ अतःसर्वोत्तमइति ॥ प्रागुक्तगुणजातस्यसर्वोत्तमत्वंविनाऽसंभवादितिभावः ॥ इतिद्वितीयाध्यायेतृतीयावल्ली ॥ २ ॥ ३ ॥ एषजगद्वृक्षऊर्ध्वमूलः ऊर्ध्वःसर्वोच्चोविष्णुर्मूलंभूमिवत्यस्यसऊर्ध्वमूलः । ऊर्ध्वा ब्रह्मादिसर्वोच्चारमा मूलंवृक्षमूलवत्यस्यसऊर्ध्वमूलः । अर्वाक्शाखः अर्वाक्ततोवमादेवाः शाखायस्यसोर्वाक्शाखः । अश्वत्थः आशुगमनादश्वनामकोहरिस्तद्व्याप्तत्वात्तदन्नत्वाद्वाश्वत्थः । सनातनः प्रवाहतोऽनादिनित्यः । जगन्मूलभूतभगवन्माहात्म्यमेवाह ॥ तदेवेति ॥ व्याख्यातं । एतद्वैतत् ॥ १ ॥ यदिदंकिंचतत्सर्वंजगत्प्राणाख्येहरौएजतिकंपते । तस्मादेवनिःसृतं । एततब्रह्मोद्यतंवज्रं तदुपपादनायोक्तंमहद्भयमिति उद्यतवज्रवन्महाभयप्रदं । स्वधर्मातिलं

---

भाष्यं ॥ नजीवोंगुष्ठमात्रः । अतोविष्णोर्जीवाद्भेदउक्तः । अतस्सर्वोत्तमोविष्णुरितिसिद्धं ॥ २ ॥ ३ ॥

उप० ॥ ऊर्ध्वमूलोऽर्वाक्शाखएषोश्वत्थस्सनातनः । तदेवशुक्रंतद्ब्रह्मतदेवामृतमुच्यते । तस्मिँल्लोकाश्श्रितास्सर्वेतदुनात्येतिकश्चन । एतद्वैतत् ॥ १ ॥ यदिदंकिंचजगत्सर्वंप्राणएजतिनिस्सृतं । महद्भयंवज्रमुद्यतंयएतद्विदुरमृतास्तेभवंति ॥ २ ॥

घनइतिशेषः । येविदुस्तेमुक्ताभवंति ॥२॥ भयप्रदत्वमेवदर्शयति ॥ **भयादिति**॥ इंद्रश्चवर्षति । वायुश्चपवते ॥३॥ एतद्भगवद्वेदनंमनुष्यजन्मप्राप्तावेवसंपादनीयमन्यत्रालाभादितिभावेनतस्यफलमाह ॥ **इहचेदिति** ॥ यदीहमनुष्यजन्मनिशरीरस्यविस्रसोविस्रंसनात्प्राक् बोद्धुंभगवत्तत्वादिकंज्ञातुमशकत्समर्थोजात स्तर्हिस्वर्गेषुस्वरूपभूतरमणज्ञानात्मकेषुवैकुंठानंतासनश्वेतद्वीपेषुशरीरत्वाय चिन्मयशरीरत्वायकल्पतेसमर्थोभवति । अतःशरीरपातात्पूर्वमेवभगवज्ज्ञानाययत्नःकार्यइतिभावः ॥ ४ ॥ बोद्धुमित्युक्तोबोधोनसर्वेषामेकप्रकारइतिभावेनाह ॥ **यथेति** ॥ परिदृश्यतइतिवक्ष्यमाणमत्रापिसंबध्यते । यथाऽऽदर्शेमुखंपरिदृश्यतेसम्यक्दृश्यते तथात्मनिस्थितोभगवान्ज्ञानदृष्टिभिर्ऋषिभिःपरिदृश्यतेसम्यक्दृश्यतइत्यर्थः । यथास्वप्नेस्वप्नावस्थायांस्थितः पदार्थोदृश्यतेतथापितृलोकेस्थितोभगवान्दृश्यते । पूर्वंपरिदृश्यतइत्यस्याकर्षणमत्रतुदृश्यतइत्यस्यैव । तेनऋषिज्ञानात्पितृज्ञानस्यासम्यक्त्वंलभ्यते । अतएवयथास्वप्नइतिदृष्टांतोक्तिः । स्वाप्नपदार्थस्यादर्शस्थमुखवत्स्पष्टत्वाभावात् । यथाप्सुस्थितःपदार्थःपरीवदृश्यतेस्वाप्नपदार्थात्किंचित्स्पष्टतयादृश्यते तथागंधर्वलोकेस्थितोभगवान्परीवदृश्यते । ततःकिंचित्स्पष्टतयादृश्यते । छायातपयोरिव नात्यातपेनच्छायायां किंत्वहनिच्छायातपयोर्विद्यमानंवस्तुयथास्पष्टंदृश्यतेतथाब्रह्मलोकेस्थितःपुरुषोत्तमोदृश्य

---

उप ॥ महद्भयंवज्रमुद्यतंयएतद्विदुरमृतास्तेभवंति ॥ २ ॥ भयादस्याग्निस्तपतिभयात्तपतिसूर्यः । भयादिंद्रश्चवायुश्चमृत्युर्धावतिपंचमः ॥ ३ ॥ इहचेदशकद्बोद्धुंप्राक्शरीरस्यविस्रसः । ततस्स्वर्गेषुलोकेषुशरीरत्वायकल्पते ॥ ४ ॥ यथाऽऽदर्शेतथात्मनियथास्वप्नेतथापितृलोके । यथाऽप्सुपरीवदृश्यतेतथागंधर्वलोके । छायातपयोरिवब्रह्मलोके ॥ ५ ॥

ते ॥ ५ ॥ नकेवलंभगवज्ज्ञानमेवमोक्षहेतुरपितुदेवतातारतम्यादिज्ञानमपीत्याह ॥ इंद्रियाणामिति ॥ पृथक्उत्पद्यमानानां विलक्षणतयोत्पद्यमानानांपृथक्व्यापारोत्पादकानांवा । इंद्रियाणामिंद्रियदेवानां । प्रागुक्तोपलक्षणमेतत् । पृथग्भावमन्योन्य विलक्षणत्वं तारतम्यमितियावत् । यत्यावुदयास्तमयौउत्पत्तिविनाशौतौचमत्त्वाधीरोनशोचति ॥ ६ ॥ ननुकथमिंद्रियादिदेवतातारतम्यादिज्ञानाच्छोकत्यागस्तस्याभगवज्ज्ञानत्वादित्यतस्तदेवविशदयति ॥ इंद्रियेभ्यइति ॥ इंद्रियेभ्यइत्यनंतरं पराह्यर्थाअर्थेभ्यइतिग्राह्यं । सत्त्वंबुद्धिः । अधिअधिकः ॥ ७ ॥ पुरुषएवेत्यन्वयः । अलिंगोऽनुमापकरहितःजडशरीररहितोवा । किंततइत्यतआह ॥ तंज्ञात्वेति ॥ मुच्यतेसंसारात् । अमृतत्वंस्वरूपाविर्भावरूपंमोक्षं । तारतम्यांतर्गतत्वेनभगवज्ज्ञानमेव शोकत्यागहेतुरितिप्राग्विवक्षितं । अतोनदोषइतिभावः । एवमुदयास्तमयकर्तृत्वेनभगवज्ज्ञानमेवविवक्षितमित्यपिद्रष्टव्यं ॥८॥ तंज्ञात्वेत्युक्तभगवज्ज्ञानंनचक्षुरादिनानायासेनभवति । किंतुश्रवणाद्युपोद्बलितमनसैवेत्याह ॥ नेति ॥ अस्यभगवतोरूपंमत्स्याद्यवताराातिरिक्तमंतर्याम्यादिरूपंसंदृशेसम्यग्दर्शनायनतिष्ठति । अनायासेनदर्शनगोचरोनभवतीत्यर्थः । कुतः कोपिएनंभगवं

उप ॥ इंद्रियाणांपृथग्भावमुदयास्तमयौचयत् । पृथगुत्पद्यमानानांमत्त्वाधीरोनशोचति ॥ ६ ॥ इंद्रियेभ्यःपरंमनोमनसस्सत्त्वमुत्तमं । सत्वादधिमहानात्मामहतोऽव्यक्तमुत्तमं ॥ ७ ॥ अव्यक्तात्तुपरःपुरुषोव्यापकोऽलिंगएवच । तंज्ञात्वामुच्यतेजंतुरमृतत्वंचगच्छति ॥ ८ ॥ नसंदृशेतिष्ठतिरूपमस्यनचक्षुषापश्यतिकश्चिदेनं ।

तंचक्षुषानपश्यति । उपलक्षणमेतत् । कथंतर्हितज्ज्ञानमित्यतआह ॥ **हृदेति** ॥ हृदास्नेहेन स्नेहयुक्तेन मनीषामनीषया श्रवणादिजनितज्ञानेन तत्सहकृतेन मनसाअभिक्लृप्तोविषयीकृतोध्यातःसंदृशेतिष्ठतीत्यर्थः । एवंज्ञानफलमाह ॥ **यएनमिति** ॥ नचावतारोपासकानांभक्त्यादिवैयर्थ्यं । यतोस्यरूपंरामकृष्णाद्यवताररूपंसंदृशेनतिष्ठति । अनायासेनमोक्षहेतुसाक्षात्कारविषयोनभवति । कुतःकोपिएनंमोक्षार्थंचक्षुषानपश्यति । किंतुहृदामनीषामनसाभिक्लृप्तःसंदृशेतिष्ठतीत्यपिव्याख्येयं ॥ ९ ॥ हृदामनीषामनसाभिक्लृप्तइत्युक्तभक्त्यादावप्रमत्तेनभवितव्यमितिभावेनाप्रमत्तःकदाभवेदित्याकांक्षायामिंद्रियनियमनावस्थायामेवेत्याह ॥ **यदेति** ॥ यदाज्ञानानिज्ञानसाधनानिपंचेंद्रियाणिचक्षुरादीनिमनसासहावतिष्ठंते । नविषयाभिद्रवणंकुर्वंति । बुद्धिश्चनस्वविषयेविचेष्टते । अप्रमत्तस्तदाभवतीतियोज्यं । इंद्रियधारणांस्तौति ॥ **तामिति** ॥ तामिंद्रियधारणांपरमगतिसाधनत्वात्परमांगतिमाहुः ॥ १० ॥ ननुयोगस्यैवपरमगतित्वोक्तेःकथमेतदित्यतआह ॥ **तांयोगमिति** ॥ इंद्रियधारणारूपोपियोगःकमुद्दिश्यकर्तव्यइत्यतआह ॥ **योगइति** ॥ भगवतःसकाशाज्जगतःप्रभवाप्ययौप्रतियोगःजगत्प्रभवाप्ययकर्तारंभगवंतंप्रतियोगःकर्तव्यइत्येतत्प्रसिद्धमितिभावः ॥ ११ ॥ नचक्षुषापश्यतीत्युक्तमुपलक्षणमितिभावेनाह ॥ **नैवेति** ॥ प्राप्तुंज्ञातुं । तर्हिकथं

---

उप ॥ हृदामनीषामनसाभिक्लृप्तोयएनंविदुरमृतास्तेभवंति ॥ ९ ॥ यदापंचावतिष्ठंतेज्ञानानिमनसासह । बुद्धिश्चनविचेष्टतितामाहुःपरमांगतिं ॥ १० ॥ तांयोगमितिमन्यंतेस्थिरामिंद्रियधारणां । अप्रमत्तस्तदाभवतियोगोहिप्रभवाप्ययौ ॥ ११ ॥ नैववाचानमनसाप्राप्तुंशक्योनचक्षुषा ।

तज्ज्ञानंभवतीत्यतःसद्गुरूपदेशेनैवेतिभावेनव्यतिरेकमाह ॥ अस्तीति ॥ भगवानस्तिसतोधिकत्वादस्तिनामकइतिब्रुवतोगुरोरन्यत्रान्येषां भगवदनाधिक्यंजानतांसकाशात्कथंतद्ब्रह्मोपलभ्यते । नकथमपि । भगवदाधिक्यंजानतएवगुरोरुपदेशेनब्रह्मज्ञानं । नतदनाधिक्यंजानतइतिभावः । यद्वावागादिनाकुतोनप्राप्तुंशक्योभगवानित्यतोभगवदनाधिक्यज्ञानित्वादितिभावेनाह ॥ अस्तीति ॥ अन्यत्रेत्येतत्नञर्थकंव्यत्यासेनयोज्यं । तेननास्तीतिब्रुवतइतिलभ्यते । भगवान्सतःसर्वस्मात्अधिकोनभवतीतिज्ञानपुरस्सरंब्रुवतः । कर्तरिषष्ठी । कथंतदुपलभ्यते नकथमपीत्यर्थः ॥ १२ ॥ यतएवमनाधिक्यंजानतांभगवज्ज्ञानाभावः अतोभगवानस्तीत्येव सतःसर्वस्मादधिकइत्येवोपलब्धव्यः । साचोपलब्धिर्भगवत्प्रसादादेवेत्याह ॥ तत्वभावेनेति ॥ उभयोःप्रकृतिपुरुषयोस्तत्त्वंभावयतीतितत्वभावोविष्णुस्तेनतत्वभावेनप्रसन्नेनविष्णुनैवारतीत्युपलभ्यतइतिशेषः । विष्णुप्रसादसाध्यभगवदाधिक्यज्ञानवतःफलमाह ॥ अस्तीति ॥ भगवानस्तीत्येवोपलब्धस्योपलब्धिमतस्तत्वभावोविष्णुर्विशेषतःप्रसीदति ॥ १३ ॥ भगवद्विशेषप्रसादेसतिकिंभवतीत्यतआह ॥ यदेति ॥ यदास्यज्ञानिनोभगवत्प्रसादाद्धृदिस्थिताअंतःकरणाश्रिताःकामास्तेसर्वेप्रमुच्यंते सवासनाउच्छिद्यंते अथतदामर्त्योमरणादिधर्मकोपिअमृतोभवति मृतिंनैवाभियास्यतीति । अत्रमुक्तौ ब्रह्मसमश्नुते ब्रह्मविषयदर्शनादिभोगान्करोतीत्यर्थः ॥ १४ ॥ हार्दसर्वकामत्यागोपितद्धेतुमिथ्याज्ञानग्रंथिप्रभेदएवभव

उप ॥ अस्तीतिब्रुवतोन्यत्रकथंतदुपलभ्यते ॥ १२ ॥ अस्तीत्येवोपलब्धव्यस्तत्वभावेनचोभयोः । अस्तीत्येवोपलब्धस्यतत्त्वभावःप्रसीदति ॥ १३ ॥ यदासर्वेप्रमुच्यंतेकामायेस्यहृदिस्थिताः । अथमर्त्योऽमृतोभवत्यत्रब्रह्मसमश्नुते ॥ १४ ॥

तीतिभावेनाह ॥ यदेति ॥ यद्वाभगवत्प्रसादेनापिकिंभवति । मोक्षइतिचेन्न । अनेकविषयकामानांप्रतिबंधकानांसत्त्वेनामृतत्वायोगादित्यतआह ॥ यदेति ॥ अथापिमिथ्याज्ञानाश्रयाविद्याहंकारकर्मणांप्रतिबंधकानांसत्त्वात्कथंमोक्षइत्यतआह ॥ यदेति ॥ इहशरीरेवर्तमानाःहृदयस्यहृदयनस्यहृत्स्थस्यमिथ्याज्ञानस्यग्रंथयःआश्रयाःकारणीभूताइतियावत् । अविद्याहंकारकर्माणियदाप्रभिद्यंतेनितरांभिद्यंते । अथतदैवमर्त्योऽमृतोभवति । मोक्षमेवस्तौति ॥ एतावदिति ॥ एतदर्थमेवसर्ववेदानुशासनंप्रवृत्तं । तेषांदुःखप्रहाणायश्रुतिरेषाप्रवर्ततइत्युक्तेरितिभावः ॥ १५ ॥ अमृतत्वप्राप्तिस्तुब्रह्मनाड्योत्क्रमणएवभवतिनान्यथेत्याह ॥ शतमिति ॥ शतंचैकाचहृदयस्यनाड्यःसंति । तासांमध्येएकाप्रधानानाडीहृदयमारभ्यमूर्धानमभिनिःसृता । तयानाड्याऊर्ध्वमायन्नमृतत्वंमोक्षमेति । अन्यानाड्योविष्वगुत्क्रमणे तादर्थ्यसप्तमी लोकांतरगमनार्थंभवंतीत्यर्थः ॥ १६ ॥ सर्वथाजीवेश्वरभेदज्ञानमेवमोक्षसाधनमितिभावेनाह ॥ अंगुष्ठमात्रइति ॥ अंगुष्ठमात्रोजीवांगुष्ठमितोदेहांगुष्ठमितोवाजनानांहृदयेजीवस्वरूपहृदये बाह्यहृदयेवा सदासंनिविष्टोयोंतरात्मा । तंविष्णुं स्वात् स्वाख्यात् शरीरात्भगवद्वशत्वादिना शरीररूपाज्जीवात् धैर्येण प्रमाणाभासाचलितबुद्ध्याप्रवृहेत्पृथक्जानीयात् । किमिवेत्युच्यते । बाह्यान्मुंजादंतस्थामैषीकामिवेति । कुतो

उप ॥ यदासर्वेप्रभिद्यंतेहृदयस्येहग्रंथयः । अथमर्त्योऽमृतोभवतिएतावदनुशासनं ॥ १५ ॥ शतंचैकाचहृदयस्यनाड्यस्तासांमूर्धानमभिनिस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेतिविष्वगन्याउत्क्रमणेभवंति ॥ १६ ॥ अंगुष्ठमात्रःपुरुषोंतरात्मासदाजनानांहृदयेसन्निविष्टः । तंस्वाच्छरीरात्प्रवृहेन्मुंजादिवेषीकांधैर्येण ।

यंजीवाद्भेदेनज्ञेयइत्यतोविरुद्धधर्माधिकरणत्वादितिभावेनोपसंहरति ॥ **तमिति** ॥ अध्यायांतेद्विरुक्तिःस्याद्वेदेवावैदिकेपिवा । विचारोयत्रसज्येतपूर्वोक्तस्यावधारणइतिवचनात् सर्वाध्यायार्थावधारणार्थाध्यायांतेद्विरुक्तिः ॥१७॥ एवंमृत्युप्रोक्तांविद्यांप्राप्तवतानचिकेतसाविद्याफलंलब्धमित्याहवेदपुरुषः ॥ **मृत्युप्रोक्तामिति** ॥ नाचिकेतो नचिकेताएवनाचिकेतोमृत्युप्रोक्तामेतांविद्यां । कृत्स्नमिंद्रियधारणादिरूपयोगविधिंचलब्ध्वाब्रह्म प्राप्तो विरजोनिर्दुष्टोविमृत्युरभवत् । एवमन्यस्यापितन्निष्ठस्यतत्फलमतिदिशति ॥ **अन्योपीति** ॥ अन्योप्यधिकारी । अध्यात्मं अधिकात्मभगवत्स्वरूपमेवमेव पूर्वोक्तप्रकारेणैववित्सोपिब्रह्मप्राप्तोविरजोविमृत्युर्भविष्यतीत्यर्थः ॥ १८ ॥ एवंयत्प्रसादात्यत्प्रीत्यैचेदंभाष्यमुपक्रम्यसमापितवांस्तमेवभगवंतमंतेपिस्तुतिनतिभ्यांप्रीणयतिभगवानाचार्यः ॥ **नमइति** ॥ प्रभविष्णवे प्रभवनशीलायेत्यशेषमतिमंगलं ॥ १ ॥ **गुरुस्थानंदतीर्थार्यहृत्पंकजगतोहरिः । निर्दोषगुणसंपूर्णःप्रीयतामिंदिरापतिः । प्रीतस्सभगवान्विष्णुर्यद्दद्यात्फलमुत्तमं । तत्सर्वंगुरवेदद्यान्नमह्यंकिंचिदप्यृतं ॥ २ ॥ ३ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितस्यकाठकोपनिषद्भाष्यस्यटीकायांश्रीमद्वेदव्यासतीर्थपूज्यपादशिष्यवेदेशभिक्षुविरचितायांपदार्थकौमुद्यांद्वितीयोध्यायः ॥ २ ॥**

---

उप ॥ तंविद्याच्छुक्रममृतंतंविद्याच्छुक्रममृतमिति ॥ १७ ॥ मृत्युप्रोक्तांनाचिकेतोथलब्ध्वाविद्यामेतांयोगविधिंचकृत्स्नं । ब्रह्मप्राप्तोविरजोभूद्विमृत्युरन्योप्येवंयोविदध्यात्ममेव ॥ १८ ॥ द्वितीयाध्यायस्यतृतीयावल्ली ॥ २ ॥ ३ ॥ इतिश्रीकाठकोपनिपत्संपूर्णा ॥

भाष्यं ॥ नमोभगवतेतस्मैविष्णवेप्रभविष्णवे । यस्याहमाप्तआप्तेभ्योयोमआप्ततमस्सदा ॥ १ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीकाठकोपनिषद्भाष्येद्वितीयोध्यायः ॥ २ ॥

